शबरेण सहोपेत्य प्रह्वा प्राह स्म भूपतिम् ।
कुमारानुचरत्वेऽसावनुरूप इवार्भकः ॥ ६९ ॥

अस्यागमनमप्यस्माद् विज्ञेयमिति भूभुजा ।
पृष्टः शम्बरवृद्धस्तं प्रणनामाभ्यधत्त च ॥ ७० ॥

अस्त्यस्मिन् विन्ध्यसेनायाः कश्चिन्मातृष्वसुः पतिः ।
नातिदूरे किरातेन्द्रस्तन्मातुलमवैतु माम् ॥ ७१ ॥

ते वयं मैथिलं यान्तमाकर्ण्य वनवर्त्मना ।
निरोद्धुं दत्तसङ्केताः प्रत्यतिष्ठाम शस्त्रिणः ॥ ७२ ॥

प्रवृत्ते च ततः सार्थे किरातैरामिषेप्सुभिः ।
भग्नप्राये बले राजा चिराय समयुध्यत ॥ ७३ ॥

मां च कृत्वा किरातेन्द्रः [1]सारसञ्चयरक्षणे ।
लुप्तशेषेण सैन्येन प्रयान्तं नृपमभ्ययात् ॥ ७४ ॥

निवृत्तस्त्वहमद्राक्षं विक्षताङ्गीमथाङ्गनाम् ।
अब्रवीन्मामयं रक्ष्यो भर्तृदारक इत्यसौ ॥ ७५ ॥

तदाकर्ण्याहमभ्यर्णे करिकर्णान्तरे शिशुम् ।
आश्चर्यायुषमद्राक्षं दैवादक्षतविग्रहम् ॥ ७६ ॥

तमादायोपसृत्यैनां कासि भद्रे ! क्व यास्यसि ।
कस्यायं गम्यते कस्माद् इत्युक्ता प्रत्युवाच माम् ॥ ७७ ॥

आर्यस्यापि श्रुतिं यातो विदेहाधिपतिर्नृपः ।
प्रहारवर्मा नाम्नासौ यन्मित्रं मगधेश्वरः ॥ ७८ ॥

देव्योरपि तथैवासीत् सौहृदय्यमथैकदा ।
सह भर्त्रा सखीं द्रष्टुं सा देवी मगधान् ययौ ॥ ७९ ॥

कालेऽस्मिन् मगधेन्द्रस्य मालवेनाहवोऽभवत् ।
तत्र क्षत्रक्षयं कुर्वन् साह्यं चक्रे च नः प्रभुः ॥ ८० ॥

1. सानुजं बल-ख.



अस्त्रपञ्जरमध्यस्थो राज्ञा चम्पेश्वरेण च ।
साकमेकरथेनासौ मागधेनापवाहितः ॥ ८१ ॥

स तु घोरं पराक्रामन् दिव्यास्त्रेणावचूर्णितः ।
प्रत्यभिज्ञापि नाङ्गेषु मगधाधिपतेरभूत् ॥ ८२ ॥

मालवेन्द्रः पुरो राज्ञां स एवाव्याजपौरुषः ।
जितवान्नाहमित्युक्त्वा तत्याज निजमायुधम् ॥ ८३ ॥

सुहृद्विरहविद्धोऽपि प्रव्रज्यातो निवार्तितः ।
यमौ च जनयाञ्चक्रे तनयौ जनकेश्वरः ॥ ८४ ॥

भद्रवाहनमादाय मालवादश्वमागतः ।
ज्येष्ठपुत्रैरवष्टब्धान् विदेहानशृणोत् पथि ॥ ८५ ॥

बलैकदेशमादातुं स्वस्त्रीयाम् सुम्हनाथतः ।
अवक्रेण पथानेन क्रान्तः किं कुशली न वा ॥ ८६ ॥

माता मे मन्दभाग्यायाः करे निक्षिप्य बालकम् ।
मार्गे स्वयं कनीयांसं भर्तृदारकमग्रहीत् ॥ ८७ ॥

योऽयमाधोरणे[1] भग्नः प्रियो मे पार्श्वतो गतः ।
कुमारस्तं गजं दृष्ट्वा रुरोदारोहणेच्छया ॥ ८८ ॥

अज्ञानादहमप्येनमारोहितवती शिशुम् ।
सार्थभङ्गे हते तस्मिन् परिभ्रश्यापतद् भुवि ॥ ८९ ॥

सोऽयं दीर्घायुरेषाहम् एवं भूतास्मि विह्वला ।
ततः स्निग्धं गृहीत्वैनं प्रत्यङ्कं परिषस्वजे ॥ ९० ॥

सेनापतिश्च तं हत्वा निवृत्तः प्रेक्ष्य दारकम् ।
मत्करे विन्ध्यसेनायै साश्रं प्रेषितवानिति ॥ ९१ ॥

श्रुत्वा तौ दम्पती भग्नौ विदेह इति मूर्च्छितौ ।
आकुलेन किरातेन यथावत् कथितं पुनः ॥ ९२ ॥

1. णो. क.

अनामयं नृपस्येति श्रुत्वाश्वस्तः कुमारकम् ।
चित्तापहाराद् भूपस्तम् अपहारादयं व्यधात् ॥ ९३ ॥

(उपहारवर्मोत्पत्तिः ।)

ततोऽन्यं तत्समाकारं कृत्वा हस्ते कुमारकम् ।
प्रज्ञातो मुनिरभ्येत्य प्राप्तातिथ्यः समभ्यधात् ॥ ९४ ॥

तीर्थयात्रागतः सोऽहं भागीरथ्यामथाप्लुतः ।
अकिञ्चनत्वान्निःशङ्कं न्यवर्ते वनवर्त्मना ॥ ९५ ॥

तत्रारण्ये बहुव्यालं विरलव्याकुलप्रजम् ।
मध्याह्ने गमनश्रान्तः कमपि ग्राममभ्यगाम् ॥ ९६ ॥

तत्रोन्मत्त इवाकृत्या चैत्यवृक्षतले स्थितम् ।
कण्डूखण्डितसर्वाङ्गं वृद्धग्रामीणमैक्षिषि ॥ ९७ ॥

तस्मादशृणवं ग्रामं मरकक्षीणमानुषम् ।
यद्यदुक्तं जनैस्तत्तत् कुर्वाणमघशान्तये ॥ ९८ ॥

ततः किञ्चिदतिक्रामन्नदूरे जरतीं स्त्रियम् ।
अद्राक्षं तत्क्षणक्षोदक्षरितक्षतजोक्षिताम् ॥ ९९ ॥

कासि भद्रे ! किमित्येनाम् अप्राक्षं भृशमक्षमाम् ।
सापि मद्गौरवक्षिप्तक्षतोपद्रवमब्रवीत् ॥ १०० ॥

भद्र ! संक्षेपतो वक्ष्ये विदेहाधिपतिर्वने ।
कस्यापि हेतोः प्रस्थाता निरुद्धः प्रतिरोधकैः ॥ १०१ ॥

सार्थभङ्गे परिभ्रष्टा कान्दिशीका दिवानिशम् ।
शिशुना च करस्थेन क्रन्दन्ती वनमभ्रमम् ॥ १०२ ॥

अटव्यामटनश्रान्ता शार्दूलेनास्मि विक्षता ।
करभ्रष्टं कुमारं च प्रहर्तुमयमुद्यतः ॥ १०३ ॥

तत्रैव शबरन्यस्तं धेनुकाशवसन्निधौ ।
बाणयन्त्रं मृगान् हन्तुं तदनेनावघट्टितम् ॥ १०४ ॥



यन्त्रमुक्तेन बाणेन प्रहतः पतितो मृगः ।
अपजह्रुः किरातास्तं किशोरं द्वीपिना सह ॥ १०५ ॥

मृत्युहस्तादयं रक्ष्यो भवता भर्तृदारकः ।
ज्यायानप्यस्य मत्पुत्रीकरे किं नु करोत्यसौ ॥ १०६ ॥

इत्याकर्ण्य ततस्तूर्णं गच्छन् प्रच्छन्नमन्तिकात् ।
कुमारवधगृध्नूनां तेषामशृणवं गिरम् ॥ १०७ ॥

म्रियतामयमम्भोभिर्मज्यतां वा महाह्रदे ।
अथवा शस्त्रकृत्ताङ्गः क्षिप्यतां चण्डिकागृहे ॥ १०८ ॥

इत्थं जल्पत एवामूनभ्येत्य द्रुतमभ्यधाम् ।
शिशोरस्य वधे कल्पं जानामि स्फुटमित्यहम् ॥ १०९ ॥

ततः कुतूहलाविष्टैः पृष्टस्तानहमब्रवम् ।
गुणवानुपहारोऽयं तस्मादुपदिशामि वः ॥ ११० ॥

अक्षतस्वस्थसर्वाङ्गं भूषयित्वा कुमारकम् ।
यतध्वं विन्ध्यवासिन्यै दातुं मरकशान्तये ॥ १११ ॥

हृतं पापं प्रसन्नास्मीत्युक्ते प्रत्यक्षया तया ।
अपृष्ठालोकिनस्तावद् दत्त्वैवं गम्यतामिति ॥ ११२ ॥

अथाहं निर्गतश्छन्नं निषण्णश्चण्डिकागृहे ।
निशीथे शिशुमादाय प्राप्तं व्याधमलक्षयम् ॥ ११३ ॥

स सर्वं पूर्वनिर्दिष्टं निर्विचारमचेष्टत ।
देवतेव गृहीत्वैनं प्रागुक्तां गिरमब्रवम् ॥ ११४ ॥

गते तस्मिन्निवृत्तस्ते प्रजापालाय बालकम् ।
अर्पयित्वा यथाकामं गमिष्यामीत्युपास्थितः ॥ ११५ ॥

इत्याकर्ण्याब्रवीद् राजा विचित्रा विधिवृत्तयः ।
अहो खल्वप्रतर्क्योऽयं पुत्रयोर्मे समागमः ॥ ११६ ॥

कथं नु रत्नोद्भवकामपालयो-
र्वयस्ययोस्तस्य च सत्यशर्मणः ।

शृणोमि वार्तामपि पुत्रकाविमौ
समानयन् किं न करोति मे विधिः ॥ ११७ ॥

इत्यादिष्टे नृपेण प्रियतम ! क इमे नामतोऽप्यश्रुता मे
मैत्रीपात्रं तवामी किमिति वसुमतीवाक्यमाकर्ण्य भूयः ।
आनन्दार्द्रेण राज्ञा त्वमसि परवती देवि ! शुश्रूषया चेत्
प्रख्यातं प्रारभे त्वद्गुरुजनचरितं वक्तुमित्याबभाषे ॥ ११८ ॥

इत्यवन्तिसुन्दरीकथासारे
तृतीयः परिच्छेदः ॥

॥ चतुर्थः परिच्छेदः ॥

अथोपचक्रमे वक्तुं विचित्रं मित्रवत्सलः ।
गुरूणां चरितं देव्याश्चिराभिलषितं नृपः ॥ १ ॥

पितुर्मे धर्मसाचिव्यं कुर्वाणाः सुहृदोऽभवन् ।
मतिशर्मा धर्मपालः पद्मोद्भव इति त्रयः ॥ २ ॥

प्रथमौ कथितौ तेषाम् अग्रण्यावग्रजन्मनाम् ।
तृतीयस्तु वणिग्वंश्यस्तस्य विस्तारिणी कथा ॥ ३ ॥

वैवस्वतो मनुर्योऽसौ तस्येक्ष्वाकुरभूत् सुतः ।
कनिष्ठः किल तस्यासीन्ना[1]भागोऽरिष्ट इत्यपि ॥ ४ ॥

तस्माद्भा[2]लन्दनो नाम वणिक्पतिरजायत ।
[3]हालन्दनायनश्चैकः ख्यातः पोतप इत्यभूत् ॥ ५ ॥

तं कदाचन चाणक्यनीत्या नन्दपदे स्थितः ।
चन्द्रगुप्तो महामूल्यां मुक्तावलिमयाचत ॥ ६ ॥

तथेति स पुनर्गेहं गच्छन्नातपमूर्छितः ।
कयाचित् स्वगृहं नीत्वा प्राणितः पुरयोषिता ॥ ७ ॥

तेन प्राणोपकारिण्यै दत्ता मुक्तावली च सा ।
ततो राजकुलं वेश्या विवेश तदलंकृता ॥ ८ ॥

1. नेदि, क. 2. द्वा 3. बालन्दनानुजन्मान्यः



प्रत्यभिज्ञाय तां राजा तमाहूय च पोतपम् ।
चोदयामास राजार्हां दर्शयैकावलीमिति ॥ ९ ॥

सोऽब्रवीत् प्राणदायिन्यै प्रीतिदायः कृतो मया ।
सन्त्यन्यानि च रत्नानि स्वेच्छार्हं गृह्यतामिति ॥ १० ॥

ततः क्रुद्धाय सावज्ञं व्यज्ञापयत पोतपः ।
दत्तासंकीर्तनं धर्मस्तथापि कथयामि ते ॥ ११ ॥

अम्बुराशौ पुरा भ्राम्यन्नद्राक्षं पुरुषं क्वचित् ।
पाशबद्धं विपाश्यैनं शोकहेतुं च पृष्टवान् ॥ १२ ॥

दुर्विधत्वमिति श्रुत्वा सर्वस्वं तस्य दत्तवान् ।
पत्तनानि चरन् भूयो वित्तानि भृशमार्जयम् ॥ १३ ॥

तथान्यानि च दत्तानि नैका मुक्तावली मया ।
इत्युक्ते स पुमानस्मीत्यभ्यधायि महीभृता ॥ १४ ॥

ततः प्रीतेन भूभर्त्रा विसृष्टः पुत्रलिप्सया ।
विप्रसात्कृतसर्वस्वश्चकार तपसे धृतिम् ॥ १५ ॥

अभ्येत्य ब्राह्मणच्छद्मा गुह्यकस्तमुपह्वरे ।
धनाधिपतिसंदिष्टं निर्देष्टुमुपचक्रमे ॥ १६ ॥

अद्य खल्ववनीभर्ता तपस्यति रिपुंजयः ।
तस्मिन् काले विशालायां वीतिहोत्रादनन्तरम् ॥ १७ ॥

प्रद्योतादिष्वतीतेषु क्रमेण नृपतिष्वभूत् ।
महानन्दीति तद्राज्ये महन्नृत्तमवर्तत ॥ १८ ॥

प्रैक्षेतां मानुषाकारौ शङ्खपद्मनिधी च तत् ।
पद्मस्तयोर्निरुद्धोऽभूत् केनचिन्मन्त्रवादिना ॥ १९ ॥

अर्थवृष्ट्या विसृष्टः स प्रत्याहर्तुं च तद् वसु ।
महापद्म इति ख्यातः पुत्रोऽभूत्तस्य भूपतेः ॥ २० ॥

स संजहार सर्वेस्यां वित्तराशिमशेषतः ।
पृथिव्यां पृथिवीपालस्तस्मिन् काले द्विजोत्तमः ॥ २१ ॥

आसीत् कलापिनामास्य कन्या कात्यायनीत्यभूत् ।
अन्तर्वत्नी च सा कन्या जाता वैतानवह्निना ॥ २२ ॥

त्यक्ता दुष्टेति सा पित्रा साक्षाद्भूय हविर्भुजा ।
नीता गोदावरीं तत्र प्रासा वररुचिं सुतम् ॥ २३ ॥

पञ्चवर्षे वररुचौ तद्गृहं जग्मतुर्द्विजौ ।
एकस्तयोरभूद् व्याळिरिन्द्रदत्तस्ततोऽपरः ॥ २४ ॥

तयोर्विश्रान्तयोस्तस्मिन् नृत्तं दृष्ट्वा विलम्बितः ।
प्रदोषे गतभूयिष्ठे ययौ वररुचिर्गृहम् ॥ २५ ॥

ततः कुपितया मात्रा प्रयोगायाभिचोदितः ।
सर्वमेव यथादृष्टं दर्शयामास चेष्टया ॥ २६ ॥

दृष्ट्वैतद् विस्मितो व्याळिस्तन्मातरमभाषत ।
भद्रे ! भानोरहं सूनुर्व्याळिर्नाम द्विजन्मनः ॥ २७ ॥

लालयन्नेकपुत्रं मां नैवाध्यापितवान् पिता ।
अकृतद्विजसंस्कारं परिणाययति स्म माम् ॥ २८ ॥

एकदा दयितापादरञ्जनव्यापृते मयि ।
भिक्षार्थी तत्र मद्भार्यां दृष्ट्वास्मयत मस्करी ॥ २९ ॥

ततस्तस्मै स्मितं कृत्वा भिक्षां दत्तवती च सा ।
मया किमिति निर्बद्धा स्मितहेतुमवोचत ॥ ३० ॥

मूषिकाहं महाभागेनामुना चास्मि वर्धिता ।
जातु स्नातुं गतं भक्त्या छन्नमेवैनमन्वयाम् ॥ ३१ ॥

तत्र श्येनगृहीताहं तन्मुखाज्जाह्नवीजले ।
पतन्ती तीर्थमरणात् प्रपन्ना जातिमुत्तमाम् ॥ ३२ ॥

दृष्ट्वैतद् भर्तृवाल्लभ्यं तत्सर्वं स्मरतो मुनेः ।
अजनि स्मितमित्युक्त्वा संतस्थे किमपि प्रिया ॥ ३३ ॥

क्रन्दतो मे मुनिर्मोहं निनीषुर्मामशिश्वसत् ।
प्रव्रज्यां ग्राहितस्तस्माद् योगविद्यामशिक्षयम् ॥ ३४ ॥



अशास्त्रज्ञतया भूयः परिव्राजकसन्निधौ ।
निन्दितो मूढयोगीति [1]स्वामिधारामधारयम् ॥ ३५ ॥

आदिष्टश्च कुमारेण लब्ध्वा श्रुतधरं ततः ।
उपवर्षं भजस्वेति सोऽयमासादिताऽधुना ॥ ३६ ॥

इत्युक्ते सोऽभ्यधत्तान्य इन्द्रदत्तोऽस्मि नामतः ।
गुरोर्गोपालकस्याहं शिष्यः कांपिल्यदेशजः ॥ ३७ ॥

विरूपेति विरुद्धाख्या कन्यासीत्तस्य तां पुनः ।
सर्वविद्यावते दातुं स संकल्पितवान् पिता ॥ ३८ ॥

तस्या मम च संजज्ञे गाढं प्रेम परस्परम् ।
अनन्योपायलभ्यत्वाद् विद्योपायमचिन्तयम् ॥ ३९ ॥

ततः स्वामिगृहं गत्वा सुब्रह्मण्यमतोषयम् ।
आज्ञप्तस्त्वेवमेवाहं देवेन पुनरागतः ॥ ४० ॥

विद्याध्ययनभागी च भविष्यत्ययमर्भकः ।
एकसन्धः स नो हस्ते तद् भद्रे ! दीयतां सुतः ॥ ४१ ॥

इत्युक्ता वह्निनाप्येतद् बोधिता पूर्वमेव सा ।
रुदती पुत्रवात्सल्यात् कथमप्यभ्युपागमत् ॥ ४२ ॥

कृतोपनयनं चैनमादाय मुदिताशयौ ।
उपवर्षगृहाभ्याशं प्रतस्थाते द्विजोत्तमौ ॥ ४३ ॥

तेनापि कश्चिदर्थीति विस्मिताज्जनतामुखात् ।
उपवर्षगृहं श्रुत्वा जग्मुर्वर्षगृहान्तिके ॥ ४४ ॥

उपाध्यायः क्वेति पृष्टा तत्पत्नी रुष्टमानसा ।
अलं मा परिहस्येति पर्यश्रुनयनाभवत् ॥ ४५ ॥

ततः क्षेत्रादुपावृत्तः स्कन्धन्यस्तहलादिकः ।
उपवर्षः स तान् दृष्ट्वा विश्रान्तः पुनरब्रवीत् ॥ ४६ ॥

कतमः श्रुतधारीति तौ कात्यायनमूचतुः ।
प्रहृष्यन्नुपवर्षस्तान् विविक्ते इदमब्रवीत् ॥ ४७ ॥

1. सोऽसि. ग.

अस्मिन् वर्षोपवर्षाख्यावभूतां सहजौ द्विजौ ।
वर्षस्तयोर्महाविद्वान् उपवर्षः कृषीवलः ॥ ४८ ॥

माभूवं मूर्खजायेति ज्येष्ठभार्या कदाचन ।
मूर्खाय कशिपुं दत्वा श्वार्थं व्रतमधारयत् ॥ ४९ ॥

मूर्खोचितमसौ गृह्णन्नुपवर्षः स्वभार्यया ।
कदर्थितो रुदत्याथ व्रीळात् स्वामिगृहं ययौ ॥ ५० ॥

तत्र प्रियङ्गुतुप्त्वासौ हव्यशेषजिघित्सया ।
वृषजग्धे पुनश्चैवं [1]यावत्कालमुपावसत् ॥ ॥ ५१ ॥

ततः प्रसन्नः सेनानीः प्रत्यक्षीभूय वाङ्मयम् ।
तद्वा टङ्केन तज्जिह्वां किमपि क्षिप्तवान् मुखे ॥ ५२ ॥

एकसन्धाहते नैतां विद्यामध्यापयेति तम् ।
अभिधाय गतो देवः सोऽस्म्यहं तदधीयताम् ॥ ५३ ॥

इत्युक्तास्तेऽभिवन्द्यैतमध्यगीषत वाङ्मयम् ।
सकृत् कात्यायनः श्रुत्वा[2] द्विर्व्याळिस्त्रिरथापरः ॥ ५४ ॥

ते तु निर्वर्तितस्वार्था गुर्वर्थं दाक्षिणार्थिनः ।
महापद्मसुपेत्याथ प्रार्थयन्नर्थमीहितम् ॥ ५५ ॥

तस्मिन् काले स कन्यां स्वां संहृताशेषहाटकः ।
यो मे हेमलवं दद्यात्तस्मै देयेत्यातिष्ठिपत् ॥ ५६ ॥

ततः कणिकया हेम्नः कन्यां कश्चिदयाचत ।
कुतो लब्धमिति क्ष्मापस्तमप्राक्षीत् स चाब्रवीत् ॥ ५७ ॥

मयैतत् कन्यकालोभान्निस्सुवर्णतया भुवः ।
श्मशानलब्धमित्युक्ते हर्षादोज्झदसावसून् ॥ ५८ ॥

व्याळिशिक्षितयोगस्तमिन्द्रदत्तः कळेबरम् ।
प्रविश्यार्थैर्नृपो भूत्वा कात्यायनमतर्पयत् ॥ ५९ ॥

1. पाकमुवाप च. ख. 2. त्या. क.



अमात्येनार्यकाख्येन स्वदेहे वह्निसात्कृते ।
इन्द्रदत्तेन राज्ञैव नन्दराज्यमभुज्यत ॥ ६० ॥

विरूपया च तज्ज्ञात्वा यक्षीभूयान्वभूयत ।
इतरावपि गुर्वर्थं कृत्वा स्वैरमगच्छताम् ॥ ६१ ॥

महापद्मसुतान् सर्वानुत्कृत्यामात्यकोपितः ।
तत्पदे खलु चाणक्यश्चन्द्रगुप्तमतिष्ठिपत् ॥ ६२ ॥

स तु पद्मनिधिः शप्तः कुबेरेणान्तिकं गतः ।
यस्मादर्थिजनस्येच्छा न त्वया परिपूरिता ॥ ६३ ॥

नैव न्यायार्जितं वित्तं यत्त्वया क्षत्रजन्मना ।
तस्मान्मानुष एव त्वं भूयो भूया इति स्फुटम् ॥ ६४ ॥

स च त्वत्तनयो भूत्वा निवृत्तस्य वनाद् ऋषेः ।
पुरञ्जयस्य साचिव्यं कृत्वा त्यक्ष्यति मर्त्यताम् ॥ ६५ ॥

इत्युक्त्वान्तर्हितो यक्षः पद्मः पद्मोद्भवाख्यया ।
आसीत् तस्य सुतः पश्चान्मन्त्री च श्वशुरस्य ते ॥ ६६ ॥

तस्य रत्नोद्भवो नाम सूनुः सागरमन्वगात् ।
वार्तापि तस्य साधोर्मे यावदद्य न विद्यते ॥ ६७ ॥

यौ सुश्रुतसुमन्त्राख्यौ तस्यास्तां तनुजाविमौ ।
सत्यशर्मसुमत्याख्यौ तनयौ मतिशर्मणः ॥ ६८ ॥

सुमित्रः कामपालश्च धर्मपालसुतावपि ।
सत्यशर्मा तु धर्मात्मा तीर्थयात्रामगाहत ॥ ६९ ॥

कामपालोऽपि कामात्मा क्वासौ न ज्ञायते गतः ।
अन्ये तु खलु चत्वारो य इमे मम मन्त्रिणः ॥ ७० ॥

इति ब्रुवति भूनाथे मुनिपुत्रः किशोरकम् ।
आश्चर्याकारमाश्लिष्यन्नाजगाम जगाद च ॥ ७१ ॥

अहमद्य कळिङ्गेषु तुङ्गदारुणि कानने ।
रामतीर्थान्निवृत्तः सन् प्राप्तोऽस्मि हरमन्दिरम् ॥ ७२ ॥

आराधयिष्यन् भूतेशमभ्यर्णे पुष्पमाजनम् ।
विनिधायारभे तत्र स्नातुं निर्झरवारिणि ॥ ७३ ॥

अथाग्निमानयं देशः कश्चिदित्युच्चभाषिणीम् ।
दृष्ट्वा किमिदमित्युक्ता प्रत्यूचे काचिदङ्गना ॥ ७४ ॥

श्रूयतां यवनद्वीपे वरिष्ठस्य वणिक्पतेः ।
कालगुप्ताह्वयस्याहं जाता दुहितृवर्धनी ॥ ७५ ॥

सा कन्या यौवनारम्भे पुरुषद्वेषिणी पुनः ।
समुद्रदत्त ! कासीति मुमोहोपवने क्वचित् ॥ ७६ ॥

मया तु पृष्टा मत्प्रेम्णा रहसीदमभाषत ।
कृष्णगुप्तस्य नामाहं दुहिता पूर्वजन्मनि ॥ ७७ ॥

कदाचित्काम्यरूपेण पुंसा मे पितृसंनिधौ ।
इत्यालापितमश्रौषं भित्यन्तरनिवेदुषी ॥ ७८ ॥

समुद्रदत्तनामानं वाणिजं गणयस्व माम् ।
तस्य मे विधिवैषम्यात् कर्णीपुत्रेण मित्रता ॥ ७९ ॥

तेनापि गणिकाहेतोः परं वैरमभून्मम ।
कर्णीपुत्रः कलत्रं मे हर्तुं च प्रतिजज्ञिवान् ॥ ८० ॥

ततोऽहमकृतोद्वाहस्तन्तुच्छेदमिया पुनः ।
गूढमुद्वोढुमिच्छामीत्यस्मै तातश्च मामदात् ॥ ८१ ॥

निगूढं तेन नीताहमुज्जयिन्यां निजं गृहम् ।
कदाप्यनुनयन्तं मां पुरुषं कंचिदैक्षिषि ॥ ८२ ॥

प्रत्याचष्ट स मां पृष्टः कर्णीपुत्रोऽस्मि सुव्रते ।
अपसर्पैर्वेत्य त्वामुपासर्पं सुरुङ्गया ॥ ८३ ॥

मन्त्रदेवतया च त्वां वशीकृत्य वणिक्कुले ।
कन्येति विनिधायाहमग्रहीषं ससाक्षिकम् ॥ ८४ ॥

समुद्रदत्तायाहं त्वां दर्शयित्वा भृशक्रुधम् ।
असाक्षिकविवाहं तं व्यजेषि विदुषां पुरः ॥ ८५ ॥



ततस्तद्गृहमेव त्वां नीत्वा रात्रौ सुरङ्गया ।
महाचोर इत्येनं राज्ञा च निरवासयम् ॥ ८६ ॥

पतिव्रता मया तु त्वं न जीविष्यसि दूषिता ।
इत्यदुष्टासि तद्भद्रे यथेष्टं [1]चेष्टतामिति ॥ ८७ ॥

तच्छ्रुत्वा मर्तुकामाहं गङ्गास्रोतोनिपातिनी ।
केनाप्युत्तारिता पुंसा स तु भर्तैव मेऽभवत् ॥ ८८ ॥

स मां निर्बध्य निर्दोषां मरणान्न्यरुणत् पतिः ।
ततस्तातगृहं प्राप्य तत्रैवावामरंस्वहि ॥ ८९ ॥

लोकान्तरगते पत्यौ मृताहमिह जन्मनि ।
पूर्वोपभुक्तमुद्यानं दृष्ट्वा तत्सर्वमस्मरम् ॥ ९० ॥

इत्युक्ते तरुणः कोऽपि प्रणयास्निग्धया गिरा ।
समीपादुपसृत्यैनां प्रत्याश्वासयदाश्वसन् ॥ ९१ ॥

सोऽहमस्मि वरारोहे ! यस्ते प्राणसमो जनः ।
पुरावां हंसमिथुनं वाप्यां क्वाप्यभवाव तौ ॥ ९२ ॥

नारदस्यार्चनाम्भोजेष्वावयोश्चञ्चुचापलात् ।
खण्डितेषु वियुक्त्यै नौ शशाप कुपितो मुनिः ॥ ९३ ॥

दृष्ट्वैतत् करुणाविष्टं कुमारं नलकूबरम् ।
शशाप मुनिरत्युग्रः पुत्रत्वेन तमावयोः ॥ ९४ ॥

प्रसादितः स सङ्गं नौ षोडशाब्दवियुक्तयोः ।
जातस्य तस्याप्यादिक्षत् सखित्वं चक्रवर्तिना ॥ ९५ ॥

पुत्रः पद्मोद्भवस्याहं पुष्पपुर्यां वणिक्पतेः ।
रत्नोद्भव इति ह्वाभ्यां सहजाभ्यां सहाभवम् ॥ ९६ ॥

सखित्वे राजहंसस्य कृत्वा मद्भ्रातरौ पिता ।
मां च पोतपतिं चक्रे कुलधर्ममलङ्घयन् ॥ ९७ ॥

1. चेष्टय क. ख.

वातवैषम्यतः पोते भग्ने मग्नोऽहमर्णवे ।
स्वच्छन्दचारी दैवेन द्वीपेऽस्मिन्नवतारितः ॥ ९८ ॥

चिरदृष्टमिदं दृष्ट्वा वनं प्रत्यभिजानता ।
मयासि लब्धेत्याश्लिष्य प्रहृष्टतरमब्रवीत् ॥ ९९ ॥

अस्मन्मुखादिमां वार्तामाकर्ण्य स वणिक्पतिः ।
तस्मै कन्यां ददौ कंचित्कालं तत्रोषतुश्च तौ ॥ १०० ॥

ततः कुतश्चिदत्रत्याद् राजहंसाभिषेचनम् ।
भ्रात्रोर्मन्त्रिपदप्राप्तिं श्रुत्वा श्वशुरमन्दिरात् ॥ १०१ ॥

अन्तर्वत्नीं प्रियामादायागच्छन् दर्शनेच्छया ।
अर्णवे नावि मग्नायां दूरस्थो भर्तृदारकः ॥ १०२ ॥

न दृश्यते मया सार्धं लग्नैकफलके तु सा ।
वेलातटमनुप्राप्ता बाला वायुवशेरिता ॥ १०३ ॥

उत्तारितापि दैवेन प्रियसङ्गमनाशया ।
मया च मरणावेशाद् वराकी विनिवारिता ॥ १०४ ॥

पूर्णेषु दिवसेष्वस्मिन्नभ्यर्णे पर्णमन्दिरे ।
सुतं वनमृगीवैनं दीर्घायुषमसूत सा ॥ १०५ ॥

शीतार्तिहरणायास्याः पावकान्वेषणोन्मुखी ।
बह्वपाय इहेत्येनं गृहीत्वाहमिहागमम् ॥ १०६ ॥

इत्यस्मिन्नन्तरे घोरो महिषः प्रजहार ताम् ।
तं निहत्यार्भकं हन्तुं प्रावर्तत वनद्विपः ॥ १०७ ॥

दृष्ट्वैतज्जातवै[1]हस्त्ये किंकर्तव्यतया मयि ।
सिंहबृंहानुसारी तमुत्क्षिप्य [2]प्रययौ गजः ॥ १०८ ॥

ततो गगन एवैनं फलान्तरधिया कपिः ।
गृहीत्वा मुहुराजिघ्रन्नङ्घ्रिपाग्रमगाहत ॥ १०९ ॥

1. वर्ण्ये. ख. ग.   2. प्रजहौ. ख. ग.



तदग्रात्तत्करभ्रष्टः पतन्मे पुष्पभाजने ।
न जहौ जीवितं सा तु निस्संज्ञाभवदङ्गना ॥ ११० ॥

मातरं च विचित्याहमकृतार्थः कुले कुले ।
लब्धैः स्तन्यरसैरेनं प्राप्तप्राणमिहानयम् ॥ १११ ॥

इत्याकर्ण्य मुदापूर्णः शुचा च नृपतिः सुतम् ।
पुष्पपातभुवा नाम्ना पुष्पोद्भव इति व्यधात् ॥ ११२ ॥

( देवरक्षितोत्पत्तिः)

अस्मिन्नेवान्तरे तस्मिन्नपरोऽपि द्विजोत्तमः ।
कुमारमुपनीयान्यं कथयामास तत्कथाम् ॥ ११३ ॥

तीर्थयात्रान्तरे राजन्! कावेरीतीरवर्तिनम् ।
सर्वातिथिरिति श्रुत्वा प्राप्तोऽस्मि द्विजसत्तमम् ॥ ११४ ॥

शोकाविष्टममुं दृष्ट्वा तेनाहमभिनन्दितः ।
विविक्ते विप्रमप्राक्षं शोकावे[1]शस्य कारणम् ॥ ११५ ॥

स च सर्वमवोचन्मे यथाहं मतिशर्मणः ।
सत्यशर्मेति निष्पन्नः पुत्रः पाटलिपुत्रके ॥ ११६ ॥

कृष्णसारविहारार्हो याज्ञीयो देश उच्यते ।
ब्रह्मावर्तादिरत्रापि रम्या मगधभूमयः ॥ ११७ ॥

गृहस्थधर्मं धर्माणामुत्तमं जानतोऽपि मे ।
तीर्थयात्रारसः सर्वं निर्विचारमपाहरत् ॥ ११८ ॥

ततश्चरन् दिशं याम्यां मलयप्रस्थवासिनम् ।
कलशोद्भवमद्राक्षं स मामित्यशिषन्मुनिः ॥ ११९ ॥

मन्निवासशुचावस्मिन् [2]कवेरदुहितुस्तटे ।
नैष्ठिकत्वं विसृज्यैतत् क्रियतां दारसंग्रहः ॥ १२० ॥

इत्यादिष्टमनुष्ठास्यन्नत्रैकस्य द्विजन्मनः ।
कन्यामुदवहं मोहाद् वन्ध्या च भवति स्म सा ॥ १२१ ॥

1. गेऽस्य. क.   2. सह्याद्रि. ग.

कनीयसीं पुनः कन्यामुपयम्य सुलक्षणाम् ।
तस्यामुत्पादयन् पुत्रं पितॄणामनृणोऽभवम् ॥ १२२ ॥

धात्र्या समं स मे सूनुर्वर्षजातो न दृश्यते ।
स्नेहपाशेन गाढं मामबद्धं बद्धवान् मुनिः ॥१२३ ॥

कुमारस्यापहर्तारं दिष्टशक्त्या परीक्षितुम् ।
अस्यां जनपदे नद्यां निममज्ज नृपाज्ञया ॥ १२४ ॥

ज्यायस्यां मम जायायां मज्जन्त्यामथ तज्जलम् ।
लोहितायितमालोक्य व्यस्मयन्त नृपादयः ॥ १२५ ॥

सापत्न्यादहमेवैनमप्सु क्षिप्तवती सुतम् ।
दण्डभीत्या मयेत्युक्ते व्यस्मेषततरां प्रजाः ॥ १२६ ॥

क्रूरकर्मतया राज्ञा निगृहीता पुनर्वने ।
प्रोज्झितासुरिहैवासौ बभूव च पिशाचिका ॥ १२७ ॥

प्रतिज्ञातं तया भूयो [1] जामीपुत्रविनाशनम् ।
तत् पश्यतो जुगुप्सा मे स्त्रीजातेऽपि महत्यभूत् ॥ १२८ ॥

असौ खल्वासुरी सृष्टिर्निकृष्टजनसेविनी ।
अङ्गनेति विनाशाय मायेव भुवि निर्मिता ॥ १२९ ॥

सीमाभङ्गे लघुः सिन्धुर्धर्मच्छेदे मृदुः कलिः ।
रूक्षत्वे मुनयो दैत्याः स्त्री मायेव[2] गरीयसी ॥ १३० ॥

इत्यालपन्तमुद्वेगात् तमापृच्छ्य ततो गतः ।
अदूरे स्त्रियमुद्बध्य म्रियमाणामलक्षयम् ॥ १३१ ॥

मोचिता तु मयाचख्यौ धात्रीं मां सत्यशर्मणः ।
पुत्रेण सह तद्भार्यां चिक्षेप सरिदम्भसि ॥ १३१ ॥

महौघेनोह्यमाना तं मूर्ध्नि कृत्वा स्तनंधयम् ।
काष्ठभारावलम्बाहं बह्वावर्तैं व्यवर्तिषि ॥ १३३ ॥

1. यन्मे, ग. 2. मायैव.



यावत्तत्रावलम्बिन्या संसक्ता तरुशाखया ।
तावद्दर्वीकरेणाहं दष्टा विटपवर्तिना ॥ १३४ ॥

कुमारं च दिदङ्क्षन्तं गृध्रः कोऽपि तमग्रहीत् ।
शाखामालम्ब्य चोत्तीर्णा मूढाहं विषमूर्च्छया ॥ १३५ ॥

ततो मुद्रादि कुर्वन्तं [1] मुनिमासीनमन्तिकात् ।
दृष्ट्वा शिशुमपश्यन्त्या पृष्टेनाभाषि चामुना ॥ १३६ ॥

न जाने शिशुमेकस्माद् विषमन्त्रमशिक्षयम् ।
तत्परीक्षार्थमत्र त्वां दृष्ट्वैवं कृतवानिति ॥ १३८ ॥

ततस्तेन सहान्विष्य दारकं मरणोन्मुखी ।
निराशा जीवितत्यागात्त्वयेह विनिवारिता ॥ १३८ ॥

इत्याकर्ण्याहमप्येनमन्विच्छामीति गच्छता ।
कृत्ताङ्घ्रिः पुरुषः कश्चिद् दृष्टः पम्पातटे मया ॥ १३९ ॥

सोऽब्रवीद् भद्र! कावेरीतीरवर्तिनमर्भकम् ।
आदाय दयया गच्छन् भग्नोऽस्मिन्नम्बुरक्षसा ॥ १४० ॥

सरिदर्णसि मे हस्तादभ्रश्यदयमर्भकः ।
तं निशम्य निराशोऽहमाश्वास्यैनमयासिषम् ॥ १४१ ॥

शिंशुमारशरीरोत्थं कुमारं दाशदर्शितम् ।
लेभे वणिगिति श्रुत्वा प्राप्तवान् कोलपत्तनम् ॥ १४२ ॥

तस्मिन् कोलाहलं श्रुत्वा दाशदत्तो वणिक्सुतः ।
नष्ट इत्यथ तत्रैकं कूपे पुरुषमैक्षिषि ॥ १४३ ॥

स मयोत्तारितः प्रोचे वणिक्पुत्रोऽहमौरसः ।
दाशदत्तसुतस्नेहान्मामनादृतवान् पिता ॥ १४४ ॥

तं कूपे क्षेप्तुकामेन प्रमादात् पतितं मया ।
तीर एव करभ्रष्टो न दृष्टः पुनरर्भकः ॥ १४५ ॥

1. मुनिं ध्यायन्तम्, क.

श्रुत्वैतद् गर्हमाणस्तमुत्तरेण व्रजन् वने ।
अद्राक्षं पुरुषं कश्चित् क्षरत्क्षतजवक्षसम् ॥ १४६ ॥

स जगाद मया पृष्टः कुहचित् कूपसन्निधौ ।
[1]कुमारं तं गृहं नेष्यन् रुरुणास्मि भृशं क्षतः ॥ १४७ ॥

विषाणपर्वलग्नेन कुमारेण ययौ मृगः ।
तमन्वेष्टुमशक्तोऽहं त्वयाप्यन्विष्यतामिति ॥ १४८

ततः श्रुत्वा गृहीतोऽसौ रुरुशृङ्गगतः शिशुः ।
सार्थनार्या किरातेभ्यः वस्त्रं दत्त्वेति सत्वरम् ॥ १४९ ॥

गत्वाथ स्त्रियमप्राक्षं वस्त्रक्रीतो ममार्भकः ।
सार्थभङ्गे रुदत्या मे पापैरपहृतः करात् ॥ १५० ॥

इत्याकर्ण्य निवृत्तोऽहं निराशः पुनरैक्षिषि ।
श्रोणीलग्नेन बालेन व्याकुलां शबरस्त्रियम् ॥ १५१ ॥

सा जगाद मम भ्रात्रा दत्तः सार्थहृतः सुतः ।
अन्यस्य दित्सतः पत्या मत्सपत्न्यै हठादसौ ॥ १५२ ॥

अमर्षादहमत्रैनमानीय त्यक्तुमक्षमा ।
विषण्णास्मीति तच्छ्रुत्वा तमादायाहमभ्ययाम् ॥ १५३ ॥

वामदेवाश्रमं गत्वा तद्गिराहमिहागतः ।
सखित्वे युक्तमित्येनं कुमारस्याहरामि ते ॥ १५४ ॥

इति श्रुत्वा तमाश्लिष्य प्रमोदपरवान् नृपः ।
देवरक्षितनामानं देवरक्षित इत्यधात् ॥ १५५ ॥

(अर्थपालोत्पत्तिः)

अथान्येन कुमारेण पुष्णन्ती पार्श्वमात्मनः ।
भुक्त्वास्थानगतं प्रीत्या प्राह स्म महिषी नृपम् ॥ १५६ ॥

अद्यापराह्णे बिभ्राणामधिश्रोणि स्तनंधयम् ।
दिव्ययोषितमद्राक्षं पृष्टा चैवमवोचत ॥ १५७ ॥

1. किशोरं. क.



मणिभद्रस्य भद्रे! मां विद्धि यक्षपतेः सुताम् ।
तारावलीति नाम्नाहं विचरामि वरैषिणी ॥ १५८ ॥

काशिपुर्यां पितृवने प्ररुदन्तमिमं शिशुम् ।
उपलभ्यालघुस्नेहादनैषं पितुरन्तिकम् ॥ १५९ ॥

मत्पित्रा धनदस्यायं दर्शितः स धनेश्वरः ।
परावराणां विज्ञाता मामाहूयेदमब्रवीत् ॥ १६० ॥

कीदृशस्ते शिशावस्मिन् भाव इत्यहमब्रवम् ।
औरसे यादृगित्युक्ते तन्मूलं प्रभुरभ्यधात् ॥ १६१ ॥

पुरा शौनक इत्यासीत् कोसलेषु द्विजोत्तमः ।
सोमव्रातेन नामासावधीते स्म द्विजन्मना ॥ १६१ ॥

गुरौ सशिष्ये भुञ्जाने कदाचिन्नृपवेश्मनि ।
सुता बन्धुमतीत्येषा नियुक्ता परिवेषणे ॥ १६३ ॥

दृष्टयोः पुनरन्योन्यप्रेमवृत्तिरभूत्तयोः ।
कन्याशौनकयोस्तत्र संजग्मे मिथुनं मिथः ॥ १५४ ॥

ततो गर्तेश्वरः कन्यामुपयन्तुमुपाययौ ।
तस्मै धात्रेयिकां कन्येत्युपनिन्ये सखीजनः ॥ १६५ ॥

शौनकः सह तन्वङ्ग्या निर्गतः सरयूजले ।
भिन्ननौर्नष्टपत्नीकस्तामन्विष्य न दृष्टवान् ॥ १६६ ॥

शकुन्तलुप्तशेषं तु तीरे दृष्ट्वा कळेबरम् ।
मृता सेति विलप्यासौ चक्रे तच्चाग्निसाद्वपुः ॥ १६७ ॥

नीत्वा तल्कीकसं तीर्थान्युद्वेगादाश्रमे क्वचित् ।
प्रायोपवेशमारेभे तापस्या कथयन् कथाम् ॥ १६८ ॥

श्रुत्वा बन्धुमती वार्तां निर्गत्य सहसा गृहात् ।
अहं ते दयितेत्यङ्घ्रौ निपत्येदमुवाच सा ॥ १६९ ॥

स्रोतसा नीयमानाहं कयाचिद् गोपकन्यया ।
उत्तारिता ततस्तीरे भुजङ्गस्ताममारयत् ॥ १७० ॥

आर्यपुत्रेण तत्कायः प्रायः स्यादग्निसात्कृतः ।
अहमप्यत्र तापस्या नियमं ग्राहितानया ॥ १७१ ॥

इत्यस्मिन्नन्तरे तस्मिन् बन्धुमत्याः पिताययौ ।
कन्यावञ्चनया [1]क्रुध्यद्भर्तेश्वरविवासितः ॥ १७२ ॥

ततः शौनकसाहाय्यात् प्रत्यापन्ननिजास्पदः ।
राज्यार्धं च ददौ तस्मै जामात्रे कोसलेश्वरः ॥ १७३ ॥

हंसावलीवेदिमत्यौ प्रियासख्यौ च शौनकः ।
उपयम्य नटीं चैकां विजहारात्ममा[2]यया ॥ १७४ ॥

आयुषोऽन्ते स एवासावश्मकेषु द्विजोत्तमः ।
इन्द्राणीगुप्त इत्यासीद् यं प्राहुः शूद्रकं बुधाः ॥ १७५ ॥

अथावज्ञातया शप्तः प्राप्य ब्रह्मश्रिया निशि ।
राजश्रियमपायानामन्ते गन्ता भवानिति ॥ १७६ ॥

स्वातिनाम्ना सहैवासौ ववृधे राजसूनुना ।
क्रीडाकलहमारभ्य स्वैरं वैरमभूत्तयोः ॥ १७७ ॥

बन्धुदत्तादिभिर्मित्रैरेकदा विहरन् वने ।
दुरुद्वहतरामन्यैरधारयदसौ शिलाम् ॥ १७८ ॥

शाक्यः संघिलको दृष्ट्वा बलं तस्यावधारयन् ।
तमेकाकिनमादाय प्रविवेश बिलान्तरम् ॥ १७९ ॥

रसोद्धरणकाले तु जिघांसन्तं निहत्य सः ।
दरीपतनदुःखादीननुभूय विनिर्ययौ ॥ १८० ॥

ततो विश्वलकं लब्ध्वा सुहृदं विन्ध्यगह्वरे ।
स्त्रिया कयापि तं रात्रौ भक्ष्यमाणमलक्षयत् ॥ १८१ ॥

क्रुद्धेन तु गृहीता सा मुक्तशापा दिवं ययौ ।
सौहृदय्यं निगृह्यान्तः प्रतस्थे पुनरप्यसौ ॥ १८२ ॥

1. रु. ख.     2. जा. क.



स्वगृहे शाक्यभिक्षुण्या वञ्चयित्वा जिघांसितः ।
दुःस्वप्नबोधितस्तस्माद् विदिशाभिमुखो ययौ ॥ १८३ ॥

सुहृद्भिः सहितो भूत्वा बन्धनागारवर्तिनम् ।
बन्धुदत्तं ततो हृत्वा जगामोज्जयिनीं प्रति ॥ १८४ ॥

बन्धुदत्तगृहं गत्वा तस्मिन् भरतकन्यया ।
अनुरक्तः स रागिण्या रेमे रङ्गपताकया ॥ १८५ ॥

ततो विनयवत्याख्यामुद्याने नृपकन्यकाम् ।
दृष्ट्वा दृष्टिविषेणान्तः स्पष्टं दष्ट इवाभवत् ॥ १८६ ॥

कन्दर्पसर्पदष्टान्तर्दंष्ट्रा दर्वीकरेण च ।
सा तु शूद्रकसंस्पर्शेनोभयस्मादजीव्यत ॥ १८७ ॥

ततः कन्यापुरं गच्छन् रात्रौ हृच्छयमूर्च्छया ।
स्त्रैणाध्यक्षजनैः क्रुद्धैर्वध्योऽसावित्यबध्यत ॥ १८८ ॥

ततः कथञ्चिन्निर्मुक्तो मृत्युप्रायादपायतः ।
धात्रीमुखेन तां कन्यामपहृत्य ययौ पुरात् ॥ १८९ ॥

मार्गे माळवराजेन प्रसह्यापहृतां प्रियाम् ।
उपलभ्य तृषा तस्याः पानीयार्थी ययौ स्वयम् ॥ १९० ॥

विना विनयवत्यासौ गच्छन् कृच्छ्रमनीयत ।
वने वनचरव्रातैः कारां चोरचमूपतेः ॥ १९१ ॥

तत्कन्ययानुभूयासावार्यदास्याभिधानया ।
अमुच्यत तया च्छन्नं बन्धनाद् बद्धरागया ॥ १९२ ॥

ततः प्रियां प्रति भ्राम्यन् विन्ध्यकाननलुब्धकात् ।
लीनां विप्रकुले क्वापि श्रुत्वा सत्वरमभ्ययात् ॥ १९३ ॥

ततोऽपि मथुरां नीतामाकर्ण्य मथुरां ययौ ।
द्विजेन स्वतनूजायाः सखित्वे वर्ततामिति ॥ १९४ ॥

तत्र स्नातः सरस्तोये निहितस्तेयदर्शिनः ।
पुरुषाश्चोर इत्येनं निन्युर्बद्धभुजद्वयम् ॥ १९५ ॥

दृष्ट्वा विनयवत्येनं भर्तारं चोरचिह्नितम् ।
अमात्येन सखीपित्रा क्षणं मृत्योर्न्यवर्तयत् ॥ १९६ ॥

उपहारकृते रात्रौ पशुवन्मारितोऽप्यसौ ।
न जहौ जीवितं भूयः प्रेयस्या समगच्छत ॥ १९७ ॥

स तु मा[1]तुल एवासीदास्ते यस्या गृहे प्रिया ।
तत्कन्यामपि तन्वङ्गीमुपयेमे स यज्ञदाम् ॥ १९८ ॥

मथुरेन्द्रदुहित्रासौ रमितः शूरसेनया ।
[2]वसन् मृत्युमुखप्रायानपायानयमन्वभूत् ॥ १९९ ॥

बहूनां विपदामन्ते विगृह्य स्वातिना सह ।
बालमित्रमहत्त्वैनं जीवग्राहमजिग्रहत् ॥ २०० ॥

सुहृद्भिर्दयिताभिश्च प्रचितप्रेमभिः सह ।
[3]शतं समाः क्ष्मामेकः शशास चतुरर्णवाम् ॥ २०१ ॥

शबरक्षोणियुद्धेन मृत्वैक[4]परमेश्वरः ।
धर्मपालस्य नामासीत् कामपालाख्यया सुतः ॥ २०२ ॥

स कदाचित् सखीमध्ये क्रीडन्तीं नृपकन्यकाम् ।
पश्यन् कान्तिमतीं नाम श्रान्तां कन्दुकलीलया ॥ २०३ ॥

अभिपन्नशरीरोऽभूदशरीरशरव्यताम् ।
अनुक्त्वा विकृतिं तस्यास्त्वगोचरतया गिराम् ॥ २०४ ॥

विक्रीणाना गुणांस्तस्य प्राणादिधनमात्मनः ।
मनोविनिमयं कृत्वा कन्या कन्यागृहं गता ॥ २०५ ॥

असुग्योऽपि गरीयस्यः सोमदेवीसुलोचने ।
इन्द्रसेनेति तत्सख्यः स्मरवेगमगोपयन् ॥ २०६ ॥

कामपालः प्रियं दृष्ट्वा सखीभिश्चाभिनन्दितः ।
तया प्रहितमेकान्ते कामलेखमलक्षयत् ॥ २०७ ॥

1. लव. ख. ग.
2. याव. ख-
3. रममाणः. क.
4. व. ग.



स्मरमन्थरया बुद्ध्या रचितानि नतभ्रुवा ।
अनङ्गपत्रे तत्रासन् मधुराण्यक्षराण्यपि ॥ २०८ ॥

“ मुग्धा पञ्जरहंसी चन्द्रं निर्वर्ण्य पुण्डरीकधिया ।
स्फुरितानि तानि तान्यप्यभिलाषबलात्कृता कुरुते ” ॥ २०९ ॥

अमन्दानन्दसन्दोहमनुभूयेति वाङ्मयम् ।
मृदु[1]वल्कलमालूय प्रतिलेखमथाकरोत् ॥ २१० ॥

कान्तिमत्यपि चिन्ताब्धेस्तरणोपायदर्शिनीम् ।
सखीव प्रियसंदिष्टां तस्मिन्नार्यामवाचयत् ॥ २११ ॥

“ यद्यभिलषसि द्विजवरमवैहि तं राजहंसि ! जलमध्ये ।
गतमेव चरणगोचरमचिरात् प्रतिमामुखेनापि ” ॥ २१२ ॥

तद्गुणस्मरणेनास्यामनङ्गज्वरकारिणी[2] ।
यदसौ नृपकन्यायामनार्यं कृतमार्यया ॥ २१३ ॥

इन्द्रसेनाख्यया सख्या कृत्वा [3]पुस्तस्मराकृतिम् ।
तत्सग्रहच्छलेनासावन्तःपुरमनीयत ॥ २१४ ॥

तत्राविदितनिर्वृत्तक्षत्रोचितकरग्रहः ।
रममाणः स तास्तिस्र उपयेमे प्रियासखीः ॥ २१५ ॥

आपन्नसत्त्वा सा देवी प्रच्छन्नं सुषुवे सुतम् ।
रात्रौ पितृवनं नीत्वा त्यक्तः स शबरस्त्रिया ॥ २१६ ॥

क्षुधार्तया पिशाच्यैष भक्ष्यमाणः स्वसूनुना ।
रुद्धो मे प्रातराशोऽस्त्वित्युभयोः कलहे सति ॥ २१७ ॥

रक्षिदर्शनसम्भ्रान्त्या रहस्यं विवृतं तया ।
अन्तःपुरान्निबध्यासौ वध्यभूमिमनीयत ॥ २१८ ॥

तस्मिन् बन्धनमेवास्याच्छिनन्मारणसम्भ्रमे ।
ततो निम्नत एवासौ निहत्य प्रययौ स्वयम् ॥ २१९ ॥

1. पल्लव क.
2. णा. ख.
3. गुप्त ख. ग.

बह्वामिषतया तस्मिन्नपहाय शिशुं ययौ ।
सपुत्रा च पिशाची सा विभाता च विभावरी ॥ २२० ॥

इयं तारावली तत्र प्रयान्ती शिशुमग्रहीत् ।
अस्याः पुत्र इवामुष्मिन् भावहेतुर्निशम्यताम् ॥ २२१ ॥

शौनकः शूद्रको भूत्वा कामपालोऽद्य वर्तते ।
बन्धुमत्या विनयवत्यभिन्ना कान्तिमत्यपि ॥ २२२ ॥

यज्ञदा वेदिमत्येव सोमदेवी च वर्तते ।
हंसावली शूरसेना सैवान्ते च सुलोचना ॥ २२३ ॥

धात्रेयिका नन्दिनिकेत्यनुरक्ता च शौनकम् ।
मध्ये रङ्गपताकासीदिन्द्रसेना च जायते ॥ २२४ ॥

या सा गोपवधूः पूर्वं शौनकेनाग्निसंस्कृता ।
आर्यदास्यपि सैवासीद् भूयस्तारावली च सा ॥ २२५ ॥

अस्यामेवार्यदासीत्वे जातः सोऽयं कुमारकः ।
शूद्रकादद्रिसाराख्यः पुत्रस्नेहस्तु तत्कृतः ॥ २२६ ॥

अर्थपाल इति व्यक्तं मन्नामैव भवत्वयम् ।
वर्धयित्री वसुमती तत्तस्यै दीयतामसौ ॥ २२७ ॥

इत्यादिष्टा धनेशेन प्रत्यानेतुमिहागता ।
इत्यर्पयित्वा हस्ते मे तत्रैवान्तरियाय सा ॥ २२८ ॥

मुदितवान् नृपतिः स निशम्य गा-
    मुदितवागमृतैः सह मन्त्रिभिः ।
अनयदूषितबुद्धिरिमां निशा-
    मनयदूढमदः सुतवार्तया ॥ २२९ ॥

इति दशभिरमीभिः प्रत्यहं वर्धमानैः
    शशिनमिव विशेषैः कान्तिमद्भिः कलानाम् ।
ललितगुणविशेषं वीक्षमाणः कुमारान्
    नृपतिरवजगाहे मध्यमानन्दसिन्धौ ॥ २३० ॥

॥ इत्यवन्तिसुन्दरीकथासारे चतुर्थः परिच्छेदः ॥



॥ अथ पञ्चमः परिच्छेदः ॥

अत्राश्रमे मृगैः सार्धं वर्धमानेषु सूनुषु ।
वामदेवमुपासीने नृपे च सचिवैः सह ॥ १ ॥

वाजिरत्नं गजेन्द्रं च प्रशस्ता बडवा अपि ।
आदायाभिगतो व्याघ्रदमनः समदृश्यत ॥ २ ॥

भद्रवाहनमश्वं च हेमकूटमपि द्विपम् ।
पश्यन्नुत्पत्तिमाश्चर्यामित्यूचे मुनिरेनयोः ॥ ३ ॥

आदिसर्गे पुरा स्रष्टुर्व्यशीर्यन्ताश्रुबिन्दवः ।
होमधूमस्पृशो नेत्रात् तत्राश्वा बडवा अपि ॥ ४ ॥

पुरुषश्च ततो जातः स सुराणामथाध्वरे ।
प्रनष्टां वाचमन्वेष्टुं जगाम जलवर्त्मना ॥ ५ ॥

मत्स्यापदेशात् तं देवा ददृशुर्जलचारिणम्[1] ।
सुरप्रार्थनया गत्वा यज्ञसाहाय्यकं व्यधात् ॥ ६ ॥

विश्वावसुमुखैर्दिव्यैः सेव्यमानः कदाचन ।
विलम्ब्यागमनं तेभ्यः स शुश्रावेन्द्रसेनया ॥ ७ ॥

अथेन्द्रपदमादित्सुस्तपस्यन्नप्सरस्त्रिया ।
शक्रप्रेषितया हित्वा तपो रेमे मनोज्ञया ॥ ८ ॥

तयोरन्योन्यशापेन मृग्युलूकत्वमीयुषोः ।
अनेकशतमश्वानामण्डात् पक्षत्रतामभूत् ॥ ९ ॥

शालिहोत्रो मुनिः पश्यन् देवसस्यविलोपिनः ।
शिष्यवत् परिगृह्याश्वान् पक्षच्छेदमथाकरोत् ॥ १० ॥

पित्रोः स्वरूपलाभादीनुपलभ्य बहून् वरान् ।
तुरगास्ते सुरेन्द्राणां बभूवुर्वाहनान्यमी ॥ ११ ॥

पक्षच्छेदकृतामर्षैर्भक्ष्यमाणमृषिं हयैः ।
दृष्ट्वाहसन्नप्सरसः क्रुद्धस्ताः शप्तवान् मुनिः ॥ १२ ॥

---

1. यायिनम्, क.

बडवा भवतेत्येष प्रतिशप्तश्च वाजिणा ।
अश्वयोनौ पतिस्तासां भवानेव भवत्विति ॥ १३ ॥

ता एता बडवाः सोऽयं तुरगश्च मुनीश्वरः ।
राजवाहनवाहानां शापश्च प्रसवावधिः ॥ १४ ॥

ऐरावतसुतो हस्ती [1]त्वत्प्रसादाद् भुवं गतः ।
मालवेन्द्राहवादूर्ध्वं वनेऽस्मिन् विहरत्यसौ ॥ १५ ॥

इत्यादिश्य कथामेतां जगाम स्वाश्रमं मुनिः ।
नृपश्च परया प्रीत्या गजाश्वबलमग्रहीत् ॥ १६ ॥

ततः सर्वे यथाकालं कृतोपनयनादयः ।
अवर्धन्त मृगेन्द्राणां किशोरा इव दारकाः ॥ १७ ॥

तेभ्यः सर्वासु विद्यासु धनुर्वेदे कलासु च ।
विशिष्टः षोडशं वर्षं जगाहे राजवाहनः ॥ १८ ॥

आशाविजयकालोऽयं कुमारस्येति मन्त्रिणा ।
विज्ञापिते बलाद् राज्ञाप्यन्वज्ञायि[2] हराज्ञया ॥ १९ ॥

वामदेवः प्रयाणाय प्रणमन्तमनन्तरम् ।
उपहूयैवमेकान्ते राजवाहनमब्रवीत् ॥ २० ॥

कुमार! ज्ञातवेद्येषु त्वादृशेष्वनुशासनम् ।
श्रम एवापि तु स्नेहाद् वाच्यमेव हितं वचः ॥ २१ ॥

रुध्यतामिन्द्रियग्रामः परग्रामस्ततस्त्वया ।
जीयतामरिषड्वर्गः प्रथमं तदनु द्विषः ॥ २२ ॥

सन्ध्यादिभिर्गुणैः षड्भिः शक्तिसिद्ध्युदयादिभिः ।
साध्यं विधिवदारब्धैः स्वामित्वं विजिगीषुणा ॥ २३ ॥

विशुद्धामात्यमित्रेण श्रुतिशास्त्रानुरोधिना ।
अद्वितीयातपत्रेयं त्वत्पित्रा रक्षिता क्षितिः ॥ २४ ॥

1. यत्प्रभावाद्. ग. 2. पि. ग.



असकृत् परिभूतेन मानसारेण मानिना ।
हरप्रसादादद्यैषा विजित्य स्वसुते कृता ॥ २५ ॥

मानसारो वनं गन्तुं प्रवृत्तोऽपि निजे गृहे ।
वसत्यवन्तिसुन्दर्या दुहितुर्वरलिप्सया ॥ २६ ॥

दर्पसारः सुतः श्याले प्रचण्डे चण्डवर्मणि ।
कृत्वा राज्यं हरावासे गिरावद्य तपस्यति ॥ २७ ॥

आत्माधीनां विधेहि त्वं विजित्य वसुधामिमाम् ।
एतावतीयमायुष्मन्! विजेतव्या वसुन्धरा ॥ २८ ॥

सप्तद्वीपार्णवाकीर्णा सप्तगोत्राचलाकुला ।
नववर्षवृतेयं ते भविष्यति वशे क्षितिः ॥ २९ ॥

स्थितः सर्वहितायोर्व्यां विष्णोरंशस्त्वदात्मना ।
मासद्वयावधिर्नूनं भावी परिभवश्च ते ॥ ३० ॥

श्वः प्रशस्तमहश्चन्द्रे रेवतीयोगशालिनि ।
मुहूर्ते विजयायास्मात् सुहृद्भिः सह गम्यताम् ॥ ३१ ॥

इत्थं यद्यन्मुनिर्विद्वान् मेधाविनमबूबुधत् ।
अबुध्यततरां तत्तत् कुमारः किं बहूच्यते ॥ ३२ ॥

ततः कुमारः प्रारेभे कृतप्रास्थानिकक्रियः ।
वामदेवं नमस्कृत्य प्रस्थानाय परेऽहनि ॥ ३३ ॥

आर्द्रीभवन्तौ ध्यायन्तौ मङ्गलानि पदे पदे ।
प्रणतः पितरौ ताभ्यामसुच्यत कथञ्चन ॥ ३४ ॥

अनुज्ञाप्य गुरून् सर्वान् कृत्वा शबरदारकम् ।
सुहृदं सिंहदमनं गुरूणां परिरक्षणे ॥ ३५ ॥

अपहारमुखैर्मित्रैरमित्रजयकाङ्क्षिभिः ।
जैत्रेण सुमुहूर्तेन प्रतस्थे दिशमुत्तराम् ॥ ३६ ॥

तेषां दक्षिणतः कोऽपि ब्रह्मचारी द्विजोत्तमः ।
शरत्समृद्धिसम्बन्धं वसन्ततिलकं जगौ ॥ ३७ ॥

सप्तच्छदस्तबकचामरधूननोऽयं
जातो मरुद् घनसितं वियदातपत्रम् ।
हारप्रसादि सरिदम्बु सरोजलीलः
कालोऽयमुद्भवति नन्दितराजहंसः ॥ ३८ ॥

इत्यन्यानि च लब्ध्वा ते सुनिमित्तानि सर्वतः ।
वैखानसकुले निन्युर्दिनं नातिदवीयसि ॥ ३९ ॥

सुमतिप्रमुखास्तस्मिन्नमात्याः स्वसुतानपि ।
आत्माधिकारसम्बद्धैरुपदेशैरशिक्षयन् ॥ ४० ॥

कथमप्यनुगच्छन्तं निवर्त्य स्वजनं पुनः ।
शून्यं विन्ध्यवनोद्देशं जग्मुर्निर्झरिणीतटे ॥ ४१ ॥

तत्रैकस्मिन् समासीनं तरुमूलतले द्विजम् ।
व्रणकर्कशकायं ते ददृशुश्चीरवाससम् ॥ ४२ ॥

उपसृत्य समासीनैरभिनन्दितसत्क्रियैः ।
पृष्टस्तैरयमात्मानं व्याहर्तुमुपचक्रमे ॥ ४३ ॥

अनास्वादितवेदेषु व्याधपिण्डोपजीविषु ।
मातङ्ग इति तन्नामा जातो विप्रकुलेष्वहम् ॥ ४४ ॥

स कदाचिद् धनुष्पाणिर्वने वनचरैः सह ।
चरन् ब्राह्मणमायान्तं वर्षीयांसमलक्षयम् ॥ ४५ ॥

जरत्कर्पटलोमेन प्रतिषिद्धाः प्रसह्य माम् ।
जरापरवशे तास्मिन् प्रजह्रुस्ते जनङ्गमाः ॥ ४६ ॥

तेषां त्रिचतुरान् हत्वा दयया तममोचयम् ।
शेषा मां तिलशः कृत्वा जग्मुस्तेऽपि किरातकाः ॥ ४७ ॥

मृतोऽहं प्रेतभर्तारं दृष्टवान् विष्टरे स्थितम् ।
स मा नित्योग्र ! पश्य त्वं नरकानित्यभाषत ॥ ४८ ॥

चित्रगुप्तस्तदाज्ञप्तः पद्मादीन् नरकान् बहून् ।
अदीदृशद् दुष्कृतिभिर्भोक्तव्यान् मा विभागशः ॥ ४९ ॥



दृष्ट्वा विस्मयमानस्तैः स्मर्यमाणसुदुःसहैः ।
नित्योग्रेति कथं प्राह प्रभुरित्यहमब्रवम् ॥ ५० ॥

चित्रगुप्तस्तदाचख्यौ शबरेन्द्रस्य कस्यचित् ।
चौर्यलब्धः सुतः कश्चित् कोलाहलिक इत्यभूत् ॥ ५१ ॥

स मूर्खः पथिकान् निघ्नन् कदाचिद् विधवां स्त्रियम् ।
न्यरुणत् पुरुषं चैकं युवत्या च स्त्रिया सह ॥ ५२ ॥

हा दीर्घदर्शिन् ! हा पुत्र ! नित्योग्रेति मुहुर्मुहुः ।
आक्रन्दन्तीं पुलिन्दस्तां भद्रे ! कासीति सोऽब्रवीत् ॥ ५३ ॥

सोचे मन्त्री विदर्भाणां दीर्घदर्शीति मे पतिः ।
स नित्योग्रमहोग्रावित्यात्मजौ मय्यजीजनत् ॥ ५४ ॥

श्रुतं कार्तान्तिकाद् राज्ञा मत्पुत्रो राज्यभागिति ।
बाल एव स नित्योग्रो राज्ञा चौर्यापहारितः ॥ ५५ ॥

तद्भीत्या मातुलावासं कनीयानप्यनीयत ।
ततः कदाचिन्मे भर्ता रहसीदमुदाहरत् ॥ ५६ ॥

अद्येहाच्युतकस्याहं भागिनेयस्य नो गृहम् ।
निमित्तेन निशि प्राप्तः श्रुतवान् मन्दिरे गिरः ॥ ५७ ॥

राज्ञा जालंधरेणाहमाहूयाभिहितोऽधुना ।
मातुलस्य तवापत्यं राजा किल भविष्यति ॥ ५८ ॥

पिता चैनं प्रसह्यास्मान्न विवर्धयति दुर्मतिः ।
असंशयमसौ वध्यस्त्वया मत्प्रियकारिणा ॥ ५९ ॥

निशम्यैतन्नृपादिष्टं क्रियतामविलम्बितम् ।
इति स्वप्रियया प्रोक्ते क्रुद्धस्तामयमभ्यधात् ॥ ६० ॥

कर्तुं मातुलपुत्रेऽहं नैतत्साहसमुत्सहे ।
इत्यस्मिन्नन्तरे प्रीत्या तस्यात्मानमदीदृशम् ॥ ६१ ॥

इत्थं प्रोचे कथं गत्वा कृत्वा पुस्तशिरः करे ।
तच्छिरश्छद्मना छित्त्वा प्रत्यागच्छ नृपान्तिकम् ॥ ६२ ॥

तथेत्यच्युतकेनोक्ते निवृत्तोऽस्मीत्यनन्तरम् ।
स मयोक्तं ततः कृत्वा नृपायापि न्यवीविदत् ॥ ६३ ॥

विमनायितमालोक्य स्वदुर्नयधियेत्यसौ ।
पतिं मे नृपतिर्नक्तं विविक्ते हन्तुमाह्वयत् ॥ ६४ ॥

रात्रौ मा हन्तुमारब्धो राज्यलोभादसाविति ।
प्रख्याप्य राज्ञा पापायाः पतिर्मे विनिपातितः ॥ ६५ ॥

तस्मादच्युतको मामप्यनैषीत् पितुरन्तिकम् ।
तस्मादपि परिभ्रष्टा ततस्तस्करसम्भ्रमे ॥ ६६ ॥

ध्वस्तः किं तस्करैरित्थं भ्राम्यन्ती पुत्रचिन्तया ।
उद्भ्रमती मृतोऽसावित्यदर्शं तरुमूर्ध्नि तम् ॥ ६७ ॥

सोऽब्रवीदम्ब ! दस्युर्मां बलादादाय निर्गतः ।
कृष्णसर्पेण दष्टस्तद्भीत्यारूढोऽस्मि शाखिनम् ॥ ६८ ॥

इत्याकर्ण्य पुनर्जातं पुत्रमादाय तद्गृहम् ।
गत्वा दस्युहते ताते शोकार्णवमगाहिषि ॥ ६९ ॥

नष्टे ज्येष्ठे सुते पत्यौ हते पितरि मारिते ।
महोग्रमात्रमासीन्मे जीवितस्यावलम्बनम् ॥ ७० ॥

तरुणीभूतमथैनं परिणाय्यामुना पथि ।
स्नुषया च सहायान्ती भवद्भिर्भद्र ! विद्रुता ॥ ७१ ॥

इति श्रुत्वा स एवाहं नित्योग्रस्तनयस्तव ।
इत्युदञ्जलिराह्लादी पुलिन्दस्तामवन्दत ॥ ७२ ॥

ततो मातरमादाय भ्रात्रा च शबरैः सह ।
गत्वा जालन्धरं रात्रौ जघान पितृघातिनम् ॥ ७३ ॥

स्वजनैः सह मात्रा च तत्रानन्तरभूपतेः ।
महोग्रं मन्त्रिणं कृत्वा जगाम वनमेव सः ॥ ७४ ॥

महोग्रः स गतो भक्त्या हस्तिवक्त्रसलोकताम् ।
दीर्घदर्शी विदेहेषु प्रहाराख्योऽभवन्नृपः ॥ ७५ ॥



ततस्त्रिस्रोतसः शापान्मानुष्यकमुपेयुषा ।
गणेशेन सह प्राप्तो महोग्रश्च मनुष्यताम् ॥ ७६ ॥

अपहारोपहाराख्यौ प्रहारस्य सुतौ च तौ ।
योऽसावच्युतकः सोऽभूद्धनमित्राख्यया वणिक् ॥ ७७ ॥

उत्पन्नः सोऽपि नित्योग्रः कर्मवासनया पुनः ।
चण्डकृष्ण इति व्याधस्तं जघान रिपुञ्जयः ॥ ७८ ॥

नरकान् विविधाकारानुभूय सहस्रशः ।
जातो विप्रकुलेषु त्वं प्राप्तश्च गतिमुत्तमाम् ॥ ७९ ॥

ब्राह्मणस्य कृते प्राणैस्त्वं चेन्नैवममोक्ष्यथाः ।
पुरेव निरयान् भूयोऽप्यविषह्यानभोक्ष्यथाः ॥ ८० ॥

लौकिकानां हिताय त्वं प्रविश स्वं कलेबरम् ।
इत्युक्तमात्रे मत्क्षेत्रे तत्रैवोन्मीलितं मया ॥ ८१ ॥

बन्धुभिः स्वगृहं नीत्वा विहितव्रणरोपणः ।
स्वस्तिमान् ब्राह्मणात्तस्मादश्रौषं च श्रुतिस्मृतीः ॥ ८२ ॥

अमानुषत्वकामं मां साक्षाद्भूयायुगेक्षणः ।
अब्रवीत् सोमशापात्त्वं क्लान्तो वत्स ! कपिञ्जल ॥ ८३ ॥

तदद्य नमुचेर्लोकं लभस्व बिलवर्त्मना ।
विन्ध्यपार्श्वगतस्तस्मिन् सहायं च तवाप्स्यसि ॥ ८४ ॥

इत्याकर्ण्य कुमारास्ते तस्मिन् विस्मितमानसाः ।
अवसन् दिवसान् कांश्चित् प्रीत्या तदनुरोधतः ॥ ८५ ॥

ततो मातङ्गकः सुप्तान् मुक्त्वा भक्तानुकम्पिनम् ।
राजवाहनमादाय प्रविवेश रसातलम् ॥ ८६ ॥

बिलकल्पोपदिष्टेन प्रविष्टौ यन्त्रवर्त्मना ।
रम्यं पुरमलोकेतां ताम्रप्राकारगोपुरम् ॥ ८७ ॥

स्नात्वा सरस्युपस्पृश्य प्रविश्य नगराङ्गणे ।
जातवेदसमुत्पाद्य स्थापितैः समिदादिभिः ॥ ८८ ॥

होमं मातङ्गकः कृत्वा रक्षायां राजवाहनम् ।
कल्पोक्तेन विधानेन प्रावर्तत निरर्गलः ॥ ८९ ॥

न शक्ष्यन्ति न सन्देहः प्रत्यूहा राजवाहने ।
इदं तु चित्रं तत्रापि प्रवृत्ता विहता अपि ॥ ९० ॥

हुते शरीरे केयूरी कृपाणी मकुटी क्षणात् ।
बभूव स्यन्दनीभूते निषण्णः कृष्णवर्त्मनि ॥ ९१ ॥

प्रभाप्रवाहे मज्जन्ती स्वलावण्याम्बुवर्षिणी ।
रमणीयतरा काचित् तरुणी प्रत्यदृश्यत ॥ ९२ ॥

सा तमग्निरथं हृष्टा निरीक्ष्य स्निग्धया दृशा ।
स्वामिन्ननुगृहीतास्मीत्याचख्यौ राजवाहनम् ॥ ९३ ॥

तावन्तःपुरमानीय स्वर्गस्पर्धिसमृद्धिमत् ।
सम्भाव्य स्निग्धया वाचा दिव्ययोषिदभाषत ॥ ९४ ॥

मन्दाकिनीति नामास्मिन्नुत्पन्ना नमुचेरहम् ।
मृते पितरि पुत्रीव नरकेणास्मि वर्धिता ॥ ९५ ॥

कन्या यज्ञवतीत्यन्या तस्यासुरपतेरभूत् ।
आवयोरपराप्यासीत् परं मित्रं तिलोत्तमा ॥ ९६ ॥

ततो यज्ञवती जातु व्यञ्जितस्मरसंज्वरा ।
किमप्युदमनायिष्ट स्नेहादस्मभ्यमभ्यधात् ॥ ९७ ॥

धर्मदेव इति ख्यातः पुरासीत् पुरुषोत्तमात् ।
तत्पत्नीपदधन्यं मे जीवनं पूर्वजन्मनि ॥ ९८ ॥

प्रिये गुरुनियोगेन प्रोषिते बदरीवने ।
दवदग्धा तदेवाद्य स्मराम्यस्मिन् भवान्तरे ॥ ९९ ॥

इत्युन्मनासि तन्वङ्ग्यां कदाचित्तरसमाकृतिम् ।
कुमारं कञ्चिदाहूय व्याजहार तिलोत्तमा ॥ १०० ॥

जाम्बवत्यामसौ जातः साम्ब इत्यम्बुजेक्षणात् ।
मनोरथानां भूमिस्ते मुनिरक्षार्थमागतः ॥ १०१ ॥



चिरदृष्टं वनं दृष्ट्वा प्रिये यज्ञवतीत्यसौ ।
तव स्मृत्वा मुहुर्मूर्च्छां गच्छन्नीतस्तवान्तिकम् ॥ १०२ ॥

इत्युक्त्वा क्षणनिष्पन्दं मन्देतरमनोरथम् ।
आनन्दाग्रमिवारूढं तद् द्वन्द्वं समजीगमत् ॥ १०३ ॥

गणरात्रात्यये दैत्यैः श्रुत्वा यज्ञवतीं हृताम् ।
साम्बः प्राग्ज्योतिषं जेतुं प्रवृत्तः क्रुद्धया धिया ॥ १०४ ॥

नारदस्य गिरा गत्वा द्वारकां गुरुभिः सह ।
जित्वा दैत्यपतौ स्वर्गं जेतुं यातेऽहरत् प्रियाम् ॥ १०५ ॥

अमर्षज्वलिते भौमे युधि स्मर्तव्यतां गते ।
स्नुषासखीति नीताहं पुरेऽस्मिन्नसुरद्विषा ॥ १०६ ॥

महाश्वेतादयः सख्यो गन्धर्वतनया अपि ।
ममासन् सा त्वहं जातु प्रणन्तुं पङ्कजेक्षणम् ॥ १०७ ॥

प्रयान्ती तरुणं कञ्चित् पतन्तं मकरालये ।
दृष्ट्वा दिष्टबलाद् भावं तस्मिन्नकरवं पुरा ॥ १०८ ॥

अश्वरूपं तमालोक्य व्यथमाना रथाङ्गिणा ।
आदिष्टा स्पष्टमेवायं भर्ता ते भवितेत्यहम् ॥ १०९ ॥

कान्तेन सह यान्तीं मामेकदा शोकविह्वलाम् ।
आह्लादयन्महाश्वेता निजवृत्तान्तविस्तरैः ॥ ११० ॥

तयोक्तः स युवा सर्वं निवेदयितुमात्मनः ।
चरितं कथयांचक्रे ततः कादम्बरीकथाम् ॥ १११ ॥

अस्मिन् विन्ध्यवने वृद्धशाल्मलिद्रुमवर्तिनोः ।
उत्पन्नः शुकदम्पत्योरेक एवास्मि शावकः ॥ ११२ ॥

[1]बाल्ये मृता सवित्री मे मत्पोषणपरायणे ।
किरातप्रहते ताते परासावपतं द्रुमात् ॥ ११३ ॥

1. समास्थिता क.

नीत्वा मुनिकुमारेण स्वाश्रमं विश्रमीकृतम् ।
जाबालिर्मुनिरालोक्य स्मित्वा मामभ्यभाषत ॥ ११४ ॥

अवन्तिष्वभवद् भूपस्तारापीड इति श्रुतः ।
पुत्रः क्षत्रकुलापीडश्चन्द्रापीडस्ततोऽभवत् ॥ ११५ ॥

मन्त्रिणः शुकनासस्य वैशम्पायन इत्यभूत् ।
तौ बहिर्नगरं गत्वा विद्यापारमपश्यताम् ॥ ११६ ॥

विद्यान्ते षोडशे वर्षे चन्द्रापीडं नराधिपः ।
आनीयेन्द्रायुधं दत्त्वा यौवराज्येऽभ्यषेचयत् ॥ ११७ ॥

दिग्जयाय ततो गत्वा हिमवत्पार्श्ववर्तिनि ।
सवैशम्पायने सैन्ये किन्नरद्वयमन्वगात् ॥ ११८ ॥

इन्द्रायुधजवाद् दूरं गत्वाच्छोदसरस्तटे ।
गीतानुसारी गत्वासावद्राक्षीद्दिव्ययोषितम् ॥ ११९ ॥

तयोपचरितः सर्वं व्यावर्ण्य चरितं निजम् ।
तद्वृत्तान्तमथापृच्छन्निश्वस्याभिदधे च सा ॥ १२० ॥

महाश्वेतेति नाम्नाहं गन्धर्वाधिपतेः सुता ।
सा त्वहं पुण्डरीकाह्वे भाववत्यभवं द्विजे ॥ १२१ ॥

चन्द्रोदये सुदुर्वारं स्मरसागरमुद्वहन् ।
जहौ प्राणान् घृणाहीना विलपामि[1] स्म केवलम् ॥ १२२ ॥

पुरुषस्तं जहारैकश्चन्द्रमण्डलनिर्गतः ।
वत्से ! मनोरथप्राप्तिर्भवितेत्यभिधाय माम् ॥ १२३ ॥

कपिञ्जलः सखा तस्य द्रुतमेव तमन्वयात् ।
अहं पुनरिहैवास इत्याम्नायत सा भृशम् ॥ १२४ ॥

तामाश्वास्य तया सार्धं गत्वा गन्धर्वकन्यकाम् ।
कादम्बरीं ददर्शाथ प्रेमव्यक्तिरभूत्तयोः ॥ १२५ ॥

1. विललापास्मि. क.



परेद्युः शिबिरं गत्वा सत्वरं पितुराज्ञया ।
ताम्बूलदायिकां दत्त्वा कादम्बर्यै गृहं ययौ ॥ १२६ ॥

ततः कदाचिदापेदे कादम्बर्याः समीपतः ।
पत्रलेखाथ सैकान्ते तद्वृत्तान्तमवर्णयत् ॥ १२७ ॥

अभूतपूर्वामन्यत्र प्रेयस्याः स्मरविक्रियाम् ।
आकर्ण्य तां स्मरन् कान्तां मुहुर्मोहमगादसौ ॥ १२८ ॥

कटकक्षोभकर्तारं श्रुत्वा हेमजटेश्वरम् ।
कुमारे[1] गन्तुमारब्धे पपात द्युपथाद् रथः ॥ १२९ ॥

श्रुत्वा चित्ररथप्रेष्यात् कादम्बर्याः स्वयंवरम् ।
तदेव रथमारुह्य प्रहृष्टैर्गुरुभिः सह ॥ १३० ॥

स्कन्धावारं ततो गत्वा चन्द्रापीडः ससैनिकः ।
सवैशम्पायनस्तूर्णं गन्धर्वनगरं ययौ ॥ १३१ ॥

ततस्तस्योरसि स्नेहात् परिहृत्य सुरासुरान् ।
चक्रे चैत्ररथी तत्र श्लाघ्यां सन्तानजस्रजम् ॥ १३२ ॥

स्वयंवरकृते युद्धे श्रुत्वा मन्त्रिसुतं हतम् ।
बद्धरागा महाश्वेता चुक्रोश भृशदुःखिता ॥ १३३ ॥

अपापामसतीबुध्या शशाप कुपितः पिता ।
चण्डालयोनिं गच्छेति सद्यः सा त्वपतन्मृता ॥ १३४ ॥

स वैशम्पायनस्तस्या दर्शनात् पूर्वजन्मनः ।
स्मरन्निवृत्तः समरात्तां निशम्याजहादसून् ॥ १३५ ॥

चन्द्रापीडेन देव्या च कादम्बर्या तथापरैः ।
प्रायोपवेशमारब्धं वारयन्नारदोऽब्रवीत् ॥ १३६ ॥

श्रूयतां पुण्डरीकोऽसौ ध्वस्तः कुसुमधन्वना ।
रूपाभिमानी मात्सर्यान्महाश्वेतानिमित्ततः ॥ १३७ ॥

1. 'ह'. ग.

जहार चन्द्रस्तत्कायं सखायं च कपिञ्जलम् ।
मर्त्यो भवेति शप्तारं शशापेन्दुरपि क्रुधा ॥ १३८ ॥

दुर्गेषु प्रभ्रमेत्युक्तश्चन्द्रापीडात्मना स्थितम् ।
कपिञ्जलस्तमेवास्मिन्नश्वो भूत्वानुवर्तते ॥ १३९ ॥

वैशम्पायन इत्यस्मिन् भूत्वा चित्तभुवैव सः ।
पुण्डरीको हतः शप्ता वृथा चेयं तपस्विनी ॥ १४० ॥

तद्भवन्तः प्रतीक्षन्तां कञ्चित्कालमिति ब्रुवन् ।
तिरोऽभून्नारदस्तेऽमी शोकव्याकुलमासते ॥ १४१ ॥

स वैशम्पायनः पश्चात् तिरश्चीं जातिमाश्रितः ।
महाश्वेतापि मातङ्गीं प्राप्ता जातिमनुत्तमाम् ॥ १४२ ॥

इत्युक्त्वा स्मृतजातिं मां निनीषुः शिष्यमभ्यधात् ।
सोऽयं चण्डालकन्यायै दीयतामभिधीयताम् ॥ १४३ ॥

स्मरायं ते महाश्वेते! मनोरथशतार्थितः ।
सोऽयं मालवराजाय शूद्रकाय निवेद्यताम् ॥ १४४ ॥

तत्राभीष्टिर्भवित्री वां स राजा नन्दिकेश्वरः ।
भवानीशापतो जातः स्त्रीभिश्चतसृभिः सह ॥ १४५ ॥

जिगीषाग्राहमुत्सृज्य त्रिवर्गेष्वपराङ्मुखः ।
स चन्द्रापीडचरितश्रवणेन भविष्यति ॥ १४६ ॥

इत्युक्ते तेन तां नीतस्तया चापि नृपान्तिकम् ।
तत्राकथयमात्मीयां कथां तदनुयोगतः ॥ १४७ ॥

ततः शशिकरानीतं स्वशरीरमशिश्रयम् ।
महाश्वेताशरीरं च रक्षितं सोमरश्मिभिः ॥ १४८ ॥

अवतारितमारूढा तं देहमपहाय सा ।
तावावां मुक्तसंक्लेशौ त्वामेव द्रष्टुमागतौ ॥ १४९ ॥

इत्याकर्ण्य गते तूर्णं तस्मिन् द्वन्द्वेऽभिवन्दितुम् ।
मुकुन्दचरणद्वन्द्वं प्राप्तां मामित्युवाच सः ॥ १५० ॥



वत्से ! मा भूद् विषादस्ते सम्पन्नस्ते मनोरथः ।
दिव्यरूपं पुरेव त्वं भर्तारमनुवर्तसे ॥ १५१ ॥

साम्बो मम सुतः क्रीडन् जरितारिमृषिं पुरा ।
हंसाकृत्या सरस्तोये क्रीडन्तं बिसतन्तुना ॥ १५२ ॥

शप्तो निगलयित्वासौ मुनिना जननान्तरे ।
निगलस्पर्शि मद्वत्ते चरणद्वन्द्वमस्त्विति ॥ १५३ ॥

स राजवाहनो नाम भूत्वा दैत्यविपत्तये ।
भर्तारं तव दुःखार्तं मर्त्यत्वान्मोचयिष्यति ॥ १५४ ॥

बहूनां जन्मनामन्ते तत्सहायः स ते पतिः ।
अग्निवर्णरथप्राप्त्या भवेदग्निरथाह्वयः ॥ १५५ ॥

अवन्तिसुन्दरीत्यास्ते यज्ञवत्यपि तत्प्रिया ।
ललामश्रीरिव स्त्रीणामवन्तिनृपतेः सुता ॥ १५६ ॥

अयं चूडामणिस्तस्मै कुमाराय प्रदीयताम् ।
नैव स्युर्मानुषा दोषा यस्मिन् मौलिगते नृणाम् ॥ १५७ ॥

इत्युक्ता हरिणा साहं प्रत्यागत्य पुरीमिमाम् ।
उत्तारिता वसन्तीह त्वयैवमनुगृह्णता ॥ १५८ ॥

इत्युक्त्वा तं मणिशफरुकाद् रत्नमुद्धृत्य धाम्ना
न्यक्कुर्वाणं द्युमणिमकरोन्मण्डनं तच्छिखण्डे ।
यत्रामुक्ते नरकभिदुरः कौस्तुभस्येव भासा
दीप्त्येवेन्दोः शिर इव हरस्याङ्गमस्याबभासे ॥ १५९ ॥

हृदयमेत्य सविभ्र[1]महाविलं-
[2]भितसखिस्मरणाख्यमहाविलम् ।
[3]गतमियेष रिपूत्तमहाबिल-
म्बितमयं च विहाय महाबिलम् (?) ॥ १६० ॥

1. भ्रहमा. क 2. जि. क. 3. न. क.

अथापृच्छ्य प्रीत्या परवति गते तत्र मिथुने
पृथग्भूय प्रायादुदधिसदृशो दैत्यविवरात् ।
कुमारः प्रीतात्मा जगति जनितानन्दमुदयी
चरन् मित्रान्वेषी दिशमिव शशी मालवपुरीम् ॥ १६१ ॥

॥ इत्यवन्तिसुन्दरीकथासारे पञ्चमः परिच्छेदः ॥

॥ अथ षष्ठः परिच्छेदः ॥

अथासौ पथि गच्छन्तं पुरुषं नगराद् बहिः ।
अद्राक्षीत् संनिकृष्यासौ मित्रं पुष्पोद्भवोऽभवत् ॥ १ ॥

न जहर्ष तथोदन्वानिन्दौ तद्दर्शने यथा ।
कुमारः परिरभ्यैनं पप्रच्छ सुहृदां गतिम् ॥ २ ॥

ततो बद्धाञ्जलिः सर्वानुक्त्वा कुशलिनः सखीन् ।
स कथामित्थमारेभे विविक्ते वक्तुमात्मनः ॥ ३ ॥

देव ! त्वय्यनिमित्तेन प्रलीने दीनमानसाः ।
मत्वा बिलगतं कृत्वा तद्द्वारे देवरक्षितम् ॥ ४ ॥

यथाप्रवे[1]शं निर्याणं नैव स्याद् बिलवासिनाम् ।
इत्यालोच्य वयं सर्वे प्राद्रवाम दिशो दश ॥ ५ ॥

संवत्सरान्ते चम्पायां सङ्गमः समयश्च नः ।
सोऽप्यहं विन्ध्यशैलस्य पश्चिमं भागमभ्यगाम् ॥ ६ ॥

तत्रैकं पुरुषं वप्रात् पतन्तं पश्यतो मम ।
आसीन्मनसि निर्वेदाद् भाव्यं प्राणमुचामुना ॥ ७ ॥

शक्यं गगन एवैनं गृहीत्वा परिरक्षितुम् ।
शोकहेतुं ततो हर्तुं यावत्सामर्थ्यमुत्सहे ॥ ८ ॥

इत्याकलय्य सद्यस्तं दोर्भ्यामालिङ्ग्य धारयन् ।
तालवृन्तानिलाम्भोभिर्जातप्राणमभाणिषम् ॥ ९ ॥

1. दे. क.



भद्र ! कस्तव निर्वेदो यः प्राणव्ययकारणम् ।
इत्युक्तः स तु सस्नेहं मामालोक्येदमभ्यधात् ॥ १० ॥

कृतं तात ! न साध्वेतद् दग्धदेहस्य रक्षणम् ।
मयापि श्रुतिशास्त्रादौ[1] कियानपि कृतः श्रमः ॥ ११ ॥

किं तेनाग्जहारैकं दयिताविरहज्वरः ।
तदहो ! बलवानेष स्नेहः किं न करोत्यसौ ॥ १२ ॥

तथा हीन्दुमतीहेतोरजं प्राणैर्व्ययूयुजत् ।
प्रमद्वरायै रुरुणाप्यायुषोऽर्धमदाप्यत ॥ १३ ॥

इत्थं सर्वाभिभाविन्या स्नेहशृङ्खलयानया ।
कृशीकृताः कियन्तो वै महान्तो मयि का कथा ॥ १४ ॥

कोऽस्य दुश्चरितं वक्तुं शक्तः कल्पशतैरपि ।
हस्तग्राह्याण्यसत्यस्मिन् प्रायो मुक्तिफलान्यपि ॥ १५ ॥

इत्युद्वेगवचः श्रुत्वा महतीयमहो ! व्यथा ।
कस्य हेतोरपि त्वस्मिन् प्रतीतिः पितरीव मे ॥ १६ ॥

मय्येवं चिन्तयत्येका जरती पुर एव नौ ।
क्रोशन्ती चरणाभ्याशं गत्वा सत्वरमब्रवीत् ॥ १७ ॥

परित्रायध्वमत्रैषा तरुणी बहुविह्वला ।
सुखोचिता चितारूढेत्याकर्ण्याभ्यपताव ताम् ॥ १८ ॥

तथावस्थां चिताकूटादाहृत्य शिशिरे क्वचित् ।
चिरं निरूप्य सैवेयं सुव्रतेत्यब्रवीत् स ताम् ॥ १९ ॥

अथोत्तस्थौ तयोस्तस्मिन्नतर्क्यस्तदवस्थयोः ।
विरहानलमुद्वेलः प्रसह्य प्रीतिसागरः ॥ २० ॥

स संभ्रमान्ते सन्तापे शान्ते मामित्यभाषत ।
भद्र ! भद्रः प्रयासस्ते फलितः श्रूयतां कथा ॥ २१ ॥

1. णाम् ख. ग.

[1]पद्मोद्भवस्य नामाहं पुत्रो भूत्वा वणिक्पतेः ।
समुद्रयायी नष्टायां नावि द्वीपान्तरं गतः ॥ २२ ॥

तत्रैनामुपलभ्यान्यजन्मनि प्रियया[2]मुया ।
रममाणश्चिरायास्या वसामि स्म पितुर्गृहे ॥ २३ ॥

श्रुत्वा पुष्पपुरीवार्तां तत्रागन्तोः कुतश्चन ।
उदारां नावमारुह्य प्रायां बन्धुदिदृक्षया ॥ २४ ॥

घोरमारुतभग्नायां मग्नायां नावि नाविकैः ।
दुर्दिनाश्रितदिग्भागैर्म(गे म?)ग्नं मग्नोऽस्मि चार्णवे ॥ २५ ॥

अनया च सहापन्नसत्त्वया मातरं त्विमाम् ।
तं पोतलवमालम्ब्य प्लवमानामलक्षयम् ॥ २६ ॥

अमूभ्यां लहरीवेगाद् दूरीभूतान्तरेऽचिरात् ।
आलिलम्बिषमाणे मय्यतीतं दृष्टिगोचरम् ॥ २७ ॥

कं न निःस्नेहयत्याशा यतोऽहं तदवस्थया ।
वियुक्तोऽप्यनया देहं नाजहां जीवनाशया ॥ २८ ॥

मया तु प्लवमानेन मत्स्यपृष्ठाधिरोहिणा ।
दैवाद् द्वीपान्तरं गत्वा तस्मिन्नेकाकिनोषितम्[3] ॥ २९ ॥

अनीये नाविकेन स्वं पोतमारोप्य केनचित् ।
बालिद्वीपं ततः सर्वामुर्वीमन्विष्टवानिमाम् ॥ ३० ॥

शरदः षोडशान्विष्य ग्रामं ग्रामं वनं वनम् ।
पुरं पुरं च नैराश्याद् भृगौ देहमपातयम् ॥ ३१ ॥

रक्षितोऽस्मि त्वया सेयं दृष्टा गर्भस्य का कथा ।
इत्याकुलोऽहमित्युक्ते जगाद जरती च सा ॥ ३२ ॥

वत्स! मद्दुहितेयं त्वद्विरहेण जहात्यसून् ।
कथमप्यर्णवोत्तीर्णा प्रासूत तनयं वने ॥ ३३ ॥

1. भद्रो ख. ग. 2. न. क. 3. ते. ख.



[1]वन्यसत्वभिया बालमालम्ब्याग्निं विचिन्वती ।
महिषाभिहता मोहं गताहं बोधिता चिरात् ॥ ३४ ॥

दृष्ट्वा द्विजवरं कञ्चिन्न बालं व्याकुलीकृता ।
आनीये तेन यत्रासावास प्रसवविह्वला ॥ ३५ ॥

दुःखार्ता तदवस्थां मामालोक्य व्यथिता भृशम् ।
अदृष्ट्वा च सुतं मत्तः प्राङ्मर्तुमियमुद्यता ॥ ३६ ॥

संस्तभ्यैनां मुनिर्वाग्भिः कल्यां कृत्वौषधैश्च माम् ।
स जगाम चिरं स्थित्वा विद्यार्थी रुचितां दिशम् ॥ ३७ ॥

मुनेरनुव्याहरणात् पुरावां हंसरूपयोः ।
विरहः षोडशाब्दानां विगमे च समागमः ॥ ३८ ॥

चक्रवर्तिसखः सूनुर्भावीति [2]त्वदुदीरितम् ।
स्मारयन्त्या मया चैषा शरदः षोडशात्ययात् ॥ ३९ ॥

साद्य त्वद्दर्शनालाभान्निराशा विवशा वने ।
चितारूढा वराकीति ब्रुवत्येव रुरोद सा ॥ ४० ॥

अथाकथयमित्थं वां पुत्रवार्ता निशम्यताम् ।
स तस्मिन् महिषं हत्वा कुमारः करिणा हृतः ॥ ४१ ॥

सिंहभीत्या द्विपोत्क्षिप्तः कपिनोत्पीड्य पातितः ।
येन व्यवहरत्येषा[3] जनस्तत्पुष्पभाजने ॥ ४२ ॥

स तं गृहीत्वा जीवन्तं निस्संज्ञेयमिति क्षणात् ।
अदृष्ट्वा जननीं निन्ये वामदेवाश्रमं मुनिः ॥ ४३ ॥

वसुमत्या सहामात्यैर्वसतः पितुराश्रमे ।
सकाशं राजहंसस्याप्यनायि स ततोऽमुना ॥ ४४ ॥

वर्धितस्तत्र भूभर्त्रा सुमत्यादिसुतैः सह ।
दिग्जयायाद्य गच्छन्तं राजवाहनमन्वयाम् ॥ ४५ ॥

1. पक्ष. ख. वृक्षे ग. 2. त. क. 3. ष. ख. ग.

तस्मिन् बिलगते देवे तमन्विष्य भ्रमन् वने ।
पित्रोर्वां पादयोर्वर्ते पुत्रः पुष्पोद्भवोऽप्यसौ ॥ ४६ ॥

इत्युदीर्य ततः पित्रोर्मज्जन् हर्षाश्रुनिर्झरे ।
तदानन्दमयं ताभ्यां सहानैषं दिनं वने ॥ ४७ ॥

अर्थसाध्यां तयोर्वृत्तिं मत्वार्थोपायचिन्तया ।
श्रीमण्डलमथालिख्य हुत्वाग्निं विजने वने ॥ ४८ ॥

प्ररोहप्रतिमाप्राणिक्षितिगन्धशिलादिभिः ।
आशङ्कितनिधौ देशे विविधैर्निधिलक्षणैः ॥ ४९ ॥

साधनैर्वर्तिकाभिश्च प्रत्यूहशमनैर्जपैः ।
यथाविध्यहमारभ्य प्रकृष्टं वसु दृष्टवान् ॥ ५० ॥

तावद्दस्युहते सार्थे साहाय्यं कुर्वतो मम ।
सार्थवाहेन तत्रासीत् सख्यं सवयसा सह ॥ ५१ ॥

भग्ने दस्युगणे [1]भस्त्रास्वारोप्य प्रचुरं धनम् ।
सार्थेन सह संप्राप्ता विशालां नगरीं वयम् ॥ ५२ ॥

सार्थवाहगृहं प्राप्तेष्वस्मासु सुहृदः पिता ।
प्रागेव श्रुतवृत्तान्तः पुत्रवन्मामपूजयत् ॥ ५३ ॥

अस्मत्पितृप्रणामाय स्वसुतां बालचन्द्रिकाम् ।
आजुहाव ततः कृत्स्नं ज्योत्स्नामयमभूद् गृहम् ॥ ५४ ॥

लावण्याम्बुमयी गात्रे कालकूटमयी दृशोः ।
लीलामयी पदन्यासे सा कन्या समदृश्यत ॥ ५५ ॥

तत्रस्थानां च सोत्प्राशं निपेतुर्बहुशो दृशः ।
तस्यां मयि च सारूप्यात् कुसुमेषोरिवेषवः ॥ ५६ ॥

तस्यां गतायामेकान्ते सार्थवाहः स मे सखा ।
अवोचन्मां तु विज्ञाय त्वदन्वेषणतत्परम् ॥ ५७ ॥

1. भस्त्रीष्वा क.



श्रूयतां गुहचामुण्डीचण्डीवाग्देवतात्मसु ।
अधीती वञ्जुलाद्येषु शकुनेषु चतुर्ष्वहम् ॥ ५८ ॥

मन्त्रवद्भिरुपक्रान्तैरेभिर्भाव्यार्थशंसिभिः ।
राजवाहनमन्वेष्टुं परीक्ष्य प्रयतावहे ॥ ५९ ॥

इति श्रुत्वा परीक्ष्यैतदुपश्रुत्याद्यनुक्रमात् ।
तदानुगुण्यसन्तुष्टः स्थितोऽहं सुहृदा सह ॥ ६० ॥

स्मरज्वरविनोदाय क्रीडानलिनकं गतः ।
अदूरे गिरमश्रौषं हा! हतास्मीत्यनन्तरम् ॥ ६१ ॥

त्वरितोपसृतः कान्तामद्राक्षं बालचन्द्रिकाम् ।
आक्षिपन् पाशमप्राक्षं किमित्युद्बन्धनोन्मुखीम् ॥ ६२ ॥

प्रत्यभिज्ञाय मां बाला निगृह्याभिदधेऽत्रपा ।
दयित! श्रूयतामस्य व्यवसायस्य कारणम् ॥ ६३ ॥

इहाम्बुविहृतिव्याजान्महासेनसुता हृता ।
ततः प्रभृति कन्याभिर्जलक्रीडा न लभ्यते ॥ ६४ ॥

सख्यास्त्ववन्तिसुन्दर्याः क्रीडादर्शनदोहलम् ।
राज्ञे विज्ञापयिष्यन्ती स्वयमेवाहमभ्ययाम् ॥ ६५ ॥

चण्डवर्मानुजेनाहं दृष्टा दारुणवर्मणा ।
तस्याप्रियभिया तस्मै पितृभ्यां चास्मि दित्सिता ॥ ६६ ॥

तदहं मृत्यवे दातुमात्मानमियमारभे ।
इत्थं भूयोऽपि तत् कर्तुं प्रवृत्तामित्यभाणिषम् ॥ ६७ ॥

प्रिये ! मैवं दुरात्मासावुपायेन निहन्यताम् ।
त्वदन्तरङ्गभूना ते ब्रवीतु पितरौ सखी ॥ ६८ ॥

व्यक्तं देवतयाविष्टा कयाचिद् बालचन्द्रिका ।
सा किलातुल्यजातीयं हन्यादस्याः करस्पृशम् ॥ ६९ ॥

इत्यनेनैव मूढात्मा न चेदेष विरंस्यति ।
सैव ब्रवीतु कन्येयं नेया तद्गृहमन्यथा ॥ ७० ॥

तस्मिन् देवतया ध्वस्ते स्वजनो विक्रियेत वा ।
तथेति च ततः पित्रा नीतायां त्वयि तद्गृहम् ॥ ७१ ॥

स्त्रीभूत्वैनं दुरात्मानं हनिष्यामि रहस्यहम् ।
इत्यभ्युपगमय्यैनां सख्या च समगंस्यहम् ॥ ७२ ॥

सा मयोक्तं तथा चक्रे मदनार्तः स दुर्मतिः ।
अन्वबध्नात् प्रियां पित्रा नीता तद्गृहमेव सा ॥ ७३ ॥

तत्सखी नाम भूत्वाहं नारीनैपथ्यकर्मणा ।
अभ्यन्तरं प्रविश्यैनं मर्माघातैरमारयम् ॥ ७४ ॥

स दैवतहतः पापः कन्यादूषक इत्यलम् ।
ख्याते जगति सौहार्दात् कन्यां मह्यमदात् पिता ॥ ७५ ॥

इत्यानुषङ्गिकं प्राप्य त्वदन्वेषणकारणम् ।
उद्यतस्यास्य लब्धं मे देवदर्शनदौहृदम् ॥ ७६ ॥

इत्थं निशम्य दिष्ट्येमौ दृष्टौ नः पितराविति ।
कुमारे कथयत्येनं परीयुर्गुरवश्च ते ॥ ७७ ॥

यथार्हमभिवन्द्याथ श्वशुरौ पितरावपि ।
कुमारः सह तैः प्रीतः स्यन्दनेनाविशत् पुरीम् ॥ ७८ ॥

स तां सतां जन्मभूमिं सम्पदां सम्पदास्पदम् ।
जगामोज्जयिनीमुर्व्या ललामश्रियमुज्ज्वलाम् ॥ ७९ ॥

तत्रोपरचितं रम्यं रत्नोद्भवगृहं गतः ।
पुरुषान् सुहृदोऽन्वेष्टुं विससर्ज नृपात्मजः ॥ ८० ॥

ततः कदाचिदाचख्यौ बालचन्द्रिकया सह ।
पुष्पोद्भवस्ते दासीयं संदिष्टा राजकन्यया ॥ ८१ ॥

ममास्मिन्ना[1]दरारब्धे भाविन्युदकदा[2]निके ।
उत्सवे तव सान्निध्यं भर्त्रा सह भवत्विति ॥ ८२ ॥

1. रवा ख. ग. 2. दानके. ख.



तदनुज्ञाय रम्या सा राजपुत्रीति मे श्रुतिः ।
किं तथेति ब्रुवाणं सा भणति स्म नृपात्मजम् ॥ ८३ ॥

ततोऽपि रमणीया सा न दृष्टा सृष्टिरीदृशी ।
ततस्तामादिशद् भर्ता तद्रूपालेख्यकर्मणि ॥ ८४ ॥

तया न शक्यमित्युक्ते कुमारः कन्यकाकृतिम् ।
ज्ञास्यन् यज्ञवतीरूपं लिलेख फलके क्वचित् ॥ ८५ ॥

दृष्ट्वा पुष्पोद्भवे चित्रं चित्रीयाविष्टचेतसि ।
स्मित्वा विस्मयमाना सा बभाषे बालचन्द्रिका ॥ ८६ ॥

अशक्यारम्भपक्षे यन्मया रूपं निरूपितम् ।
तत्तथैवेदमापन्नमुत्कण्ठा त्वत्र भिद्यते ॥ ८७ ॥

आकर्ण्याकृतिसंवादं मत्वा यज्ञवतीति ताम् ।
कुमारः स्वैरमातस्थे तत्रेत्थं कथयानया ॥ ८८ ॥

अथ द्वित्रिदिनापाये कुमारं बालचन्द्रिका ।
सचित्रफलकागत्य प्रियोपान्ते व्यजिज्ञपत् ॥ ८९ ॥

तदाकृत्य[1]विसंवादं वेत्तुं तच्चित्रकं मया ।
निन्ये कन्यापुरं दृष्ट्वा व्यस्मेष्ट च सखीजनः ॥ ९० ॥

सविक्रि[2]यं मृगाक्षी तन्निरीक्ष्य स्मरमन्थरम् ।
लिलेख तत्र तद्रूपं कुमारान्नैव भिद्यते ॥ ९१ ॥

इत्यर्पितं निरूप्यैतद्विस्मयस्तिमितेक्षणः ।
पुष्पोद्भवः सुहृद्रूपान्न विवेद तदा भिदाम् ॥ ९२ ॥

राजपुत्रोऽपि मन्ये सा स्मरत्येवान्यजन्मनः ।
अन्यथा कथमित्थं मद्रूपसिद्धिरिति स्वयम् ॥ ९३ ॥

चिन्तयित्वा चिरं भूयः सुहृदा सह तद्गृहे ।
नीत्वा दिनं दिदृक्षुस्तां निनाय क्षणदामपि ॥ ९४ ॥

1. त्या क. 2. श्रमं. क.

अपरेद्युः सहस्रार्चिष्युदयाचलचुम्बिनि ।
समादिष्टोत्सवं द्रष्टुं ससुहृद् राजवाहनः ॥ ९५ ॥

निष्क्रम्य नगरद्वारात् सिप्रावप्रगतो ययौ ।
पश्यन् पौरजनारब्धं तस्मिन्नुत्सवसंकुलम् ॥ ९६ ॥

पूर्वोज्जयिनिकां रम्यां वीक्षमाणः क्रमेण सः ।
बाह्योद्यानानि रम्याणि क्रीडास्थानमथाययौ ॥ ९७ ॥

देवस्थानतटाकस्य निष्कुटे तटवर्तिनि ।
कन्यापरिजनस्त्रीणां ददर्श विहृतिक्रियाः ॥ ९८ ॥

कन्दुकेन विमिश्रारैः करणैरपि षड्विधैः ।
चित्रदुष्करमार्गेषु क्रीडन्तीरपराः स्त्रियः ॥ ९९ ॥

पाञ्चालिकादिकाः केलिपत्रच्छेद्यानि चापराः ।
दुर्वाचकानि कुर्वन्तीरष्टादशविधान्यपि ॥ १०० ॥

लिपिभेदांश्च [1]सिन्ध्वादीन् काश्चिन्म्लेच्छाक्षराणि च ।
प्रहेलिकादिका वाचः पराश्च परिचिन्वतीः ॥ १०१ ॥

सङ्गीतगीतवादित्राण्यभ्यस्यन्तीरनेकशः ।
तास्मिन्नवन्तिसुन्दर्या ददर्श परिचारिकाः ॥ १०२ ॥

अवतीर्य रथात्तासामभिरामैः क्रियान्तरैः ।
विलासैर्विस्मितस्तस्मिन्नुद्याने निषसाद सः ॥ १०३ ॥

विचित्रपुष्पोपहारे निषण्णं दूष्यमण्डपे ।
बभाषे दयितोपान्ते कुमारं बालचन्द्रिका ॥ १०४ ॥

प्रबुद्धपद्मगन्धाढ्या वार्धिस्पर्धिजलर्धयः ।
देवस्थानतटाकस्य प्रेक्ष्यन्तां देव ! सम्पदः ॥ १०५ ॥

[2]दीव्यन्मन्दोदकानीति प्रायो दिव्यसरांस्ययम् ।
अवन्तिपुरमाश्रित्य क्षितीश इव तिष्ठति ॥ १०६ ॥

1. सिद्धा. क. 2. निन्द. क. ग.



नौविमानान्यमून्यस्मिन् संचरन्ति सहस्रशः ।
देवता इव दीव्यन्ति प्रीतास्तेषु पुरन्ध्रयः ॥ १०७ ॥

इत्यस्मिन्नन्तरे सान्द्रः सौरभातिशयोऽभवत् ।
तमाघ्रायाललापेत्थं व्याकुला बालचन्द्रिका ॥ १०८ ॥

योऽसावुदकसंचारी प्रासादः स्फटिकोज्ज्वलः ।
रजताद्रिसमः श्रीमानत्रास्ते राजकन्यका ॥ १०९ ॥

तावता शुश्रुवे युक्तः श्रावकत्वादिषड्गुणैः ।
काकादिदोषैरस्पृष्टः स्पष्टद्वाविंशतिश्रुतिः ॥ ११० ॥

द्विग्रामयोनिस्त्रिस्थानः सप्तस्वरसमुद्भवः ।
द्विसप्तमूर्च्छनायुक्तः स्पष्टाष्टादशजातिकः ॥ १११ ॥

तानैश्चतुरशीत्या च त्रिधावस्थस्त्रिवृत्तिकः ।
षोडशालंकृतिस्तालैर्विंशत्या च समन्वितः ॥ ११२ ॥

हृद्यो गीतध्वनिश्चित्राण्यातोद्यानि च सस्वनुः ।
नेदुर्मृदङ्गवाद्यानि रेणुर्भूषणराशयः ॥ ११३ ॥

प्रकीर्णकप्रभृत्यष्टप्रभेदैर्बन्धनैर्युताः ।
विचित्रनृत्ताभिनया बभूवु[1]र्वरयोषिताम् ॥ ११४ ॥

प्रहृष्टनरनारीकनौविमानशतैर्वृतः ।
आससाद स तं देशं प्रासादः प्रमदामयः ॥ ११५ ॥

तरन्तीमिव तन्मध्ये स्वलावण्योदका[2]म्बुधौ ।
इन्दुमण्डलनिष्यन्दधारामिव निरन्तराम् ॥ ११६ ॥

केशेषु कृष्णां चरिते सुभद्रां चित्राङ्गदां दोष्णि च वाचि सत्याम् ।
वर्णे च गौरीं [3]सरसां सखीषु सर्वोत्तमस्त्रीसहितामिवाङ्गे ॥ ११७ ॥

अचिन्त्यरूपरूपां तामवन्तिनृपतेः सुताम् ।
अवन्तिसुन्दरीं दृष्ट्वा कुमारः परिषस्वजे ॥ ११८ ॥

1. पु. ग. 2. या. ख. ग. 3. सु. क.

पूर्वजन्मप्रियामेनां जानन्नपि नृपात्मजः ।
धैर्यराशिरनाश्लिष्यन्नतिष्ठत् कथमप्यसौ ॥ ११९ ॥

सापि जन्मान्तरस्मृत्या दूत्येव दृढमात्तया ।
प्रेर्यमाणापि धैर्येण प्रत्युत्थानादि नाकरोत् ॥ १२० ॥

जृम्भितोत्कम्परोमाञ्चस्वेदश्वासादिविक्रियाम् ।
दृष्ट्वा तां क्षणनिष्पन्दां ववन्दे बालचन्द्रिका ॥ १२१ ॥

उत्थाय परिरभ्यैनामन्यव्याजान्नृपात्मजम् ।
सविभ्रमं प्रणम्योर्व्यां निषसाद नृपात्मजा ॥ १२२ ॥

स राजवाहनं पश्यन् सर्व एवाङ्गनाजनः ।
पुष्पधन्वानमेवैनं मूर्तिमन्तममन्यत ॥ १२३ ॥

वसुमत्यामयं जातो राजहंसान्महीपतेः ।
येन त्वं लिखितेत्येवं व्याचख्यौ बालचन्द्रिका ॥ १२४ ॥

तयोरनङ्गसङ्गीतभङ्गीरङ्गायितात्मनोः ।
विकारा विविधाकारा बभूवुर्बहुविभ्रमाः ॥ १२५ ॥

ततो हंसप्रसङ्गेन व्याजहार नृपात्मजः ।
न पीडनीयाश्चक्राङ्गास्तथा हि श्रूयतां कथा ॥ १२६ ॥

आसीत् कंसरिपोः पुत्रः साम्ब इत्यस्य वल्लभा ।
अभूत् त्रिभुवनस्त्रीणां भूषणं भौमनन्दना ॥ १२७ ॥

स तया सरसि क्रीडन्मृणालैर्निगलं ददौ ।
हंसाक्रोर्मुनेः शापान्मानुषत्वमभूत्तयोः ॥ १२८ ॥

अभिन्नरूपतां तत्र स्मरणं दर्शने तयोः ।
अल्पकालं च विश्लेषं कलयामास तन्मुनिः ॥ १२९ ॥

श्रुत्वा नृपसुताप्येवं यज्ञवत्यपि तत् फलम् ।
भुङ्क्ष एव तथाभूतेत्यतिगम्भीरमभ्यधात् ॥ १३० ॥

ततो मातृनिदेशेन व्यथमाना कथञ्चन ।
तद्गतेनैव चित्तेन प्रतस्थे नृपकन्यका ॥ १३१ ॥



तया चित्रीयमाणः स प्रवृत्त्या नृपनन्दनः ।
चकाराभ्यवहारादिष्वाभिमुख्यं सुहृद्गिरा ॥ १३२ ॥

अथाम्बुविहृतिं पश्यत्यनुरक्ते दिनश्रिया ।
विहर्तुमिव मार्ताण्डेऽप्यवतीर्णेऽपरार्णवम् ॥ १३३ ॥

क्रमेण तरुणीभूते तमसि ग्रहमण्डले ।
मण्डयत्यम्बरं चन्द्रेऽप्यैन्द्रीवदनचुम्बिनि ॥ १३४ ॥

प्रदोषसमये प्राप्ते निवृत्ते जनसंकुले ।
कथंकथमपि प्रापत् कुमारः ससुहृद् गृहम् ॥ १३५ ॥

चक्रे शय्यागतश्चिन्तां चिरदृष्टापि मे प्रिया ।
न पृष्टा कुशलं कष्टं दूरे कण्ठग्रहादयः ॥ १३६ ॥

सा राजकन्या संवृत्ता वयं च गुरुयन्त्रिताः ।
असह्यः स्मरसन्तापः किमत्र करवाण्यहम् ॥ १३७ ॥

अदत्तां गुरुभिः कान्तामदृष्ट्वा च पुरोधसम् ।
न शक्यं परिणेतुं तत् सर्वथा दुर्वहो भरः ॥ १३८ ॥

चिन्तयन्तममुं दृष्ट्वा सन्तप्तेव ततो गता ।
अवश्यायाश्रु वर्षन्ती नमदिन्दुमुखी निशा ॥ १३९ ॥

मुखमाखण्डलाशाया मण्डयत्यर्कमण्डले ।
प्रभाते सुहृदभ्येत्य व्याजह्रे राजवाहनम् ॥ १४० ॥

देव ! जागरकारी ते विकारः किमकारणम् ।
अकस्मादियमङ्गानां कथय [1]क्षामता कथम् ॥ १४१ ॥

इत्युक्तः प्रत्युवाचैनं कुमारः श्रूयतामहम् ।
साम्ब एवास्मि सा कन्या यज्ञवत्येव मे प्रिया ॥ १४२ ॥

अद्यैनामनवद्याङ्गीं प्रसङ्गात् पश्यतः प्रियाम् ।
सुप्तोत्थित इवात्यर्थं जृम्भते मे मनोभवः ॥ १४३ ॥

1. म्लान. ख.

विमृद्नन् मृदुवत्तीक्ष्णैर्विशिखैर्निखिलं जगत् ।
दुरात्मा कारयत्येव प्राणिनः किं न पातकम् ॥ १४४ ॥

भ्रूक्षेपवर्ति त्रैलोक्यं कुर्वता क्रूरकर्मणा ।
असंख्याः खण्डितप्राणाः पुण्डरीकादयोऽमुना ॥ १४५ ॥

अनेनैव प्रियाहेतोरत्यर्थं चित्तजन्मना ।
अविषह्यस्मरावस्था वयं चेत्थं कदर्थिताः ॥ १४६ ॥

करपत्रायते वायुः शिखिपुञ्जायते शशी ।
रम्यमूलानि वस्तूनि व्यत्यस्तानीव भान्ति मे ॥ १४७

किं कर्तव्यमिति श्रुत्वा हृष्टः पुष्पोद्भवोऽभ्यधात् ।
सत्यं सर्वं इमे दोषाश्चित्तजन्मनि किन्त्विह ॥ १४८ ॥

श्लाघ्याभिजनशीलायां प्रियायां प्रथमं तव ।
युक्तं चित्तभुवारब्धं सदृशस्नेहकारिणा ॥ १४९ ॥

व्यतिरिक्तविकारैव त्वत्तोऽपि नृपकन्यका ।
तदत्राभिमतप्राप्तौ विषादस्तव किं कृतः ॥ १५० ॥

दर्पसारमवज्ञाय स्वसुरस्याः करग्रहः ।
तेजोऽनुरूपं तत् सर्वं कल्याणमिव लक्ष्यते ॥ १५१ ॥

इत्यस्मिन्नन्तरे प्राप्ता विविक्ते बालचन्द्रिका ।
आचष्ट कुशलं पृष्टा सप्रत्ययमिदं वचः ॥ १५२ ॥

देवाद्य कुशलं देव्या यथावस्था निशम्यताम् ।
त्वद्दर्शनात् प्रभृत्यस्या विरक्तिः सर्ववस्तुषु ॥ १५३ ॥

तयाहूता सखीं द्रष्टुं तुङ्गतोरणगोपुरम् ।
लक्ष्मीमयमिवाश्चर्यं प्राविक्षं नृपतिक्षयम् ॥ १५४ ॥

गत्वा कन्यापुरोद्देशं तत्रोद्यानगता गिरः ।
चित्राः परिजनस्त्रीणामश्रौषं तापशंसिनीः ॥ १५५ ॥

ततः क्रीडासरस्तीरे धारागृहगतां सखीम् ।
अन्यामिव शुचा शोच्यामपश्यं नृपकन्यकाम् ॥ १५६ ॥



[illegible]मा समीक्ष्य संभ्रान्ता चिन्ताभारकृशा भृशम् ।
अपृच्छन्मां परिष्वज्य त्वद्वृत्तान्तमनन्तरम् ॥ १५७ ॥

मयोक्तं देवि ! सोऽप्येवं किमपि व्यक्तविक्रियः ।
गतायां त्वयि संतापादकरोद् वासरक्रियाम् ॥ १५८ ॥

गते सुहृद्गृहं तस्मिन्नाहूताहमिहागता ।
भद्रे ! कथमियं जाता त्वदङ्गे कथय व्यथा ॥ १५९ ॥

इति पृष्टा परिष्वज्य प्रेमगाढं चिराय माम् ।
अतिगम्भीरमारेभे विविक्ते वक्तुमित्यसौ ॥ १६० ॥

सखि ! पश्याप्रकाश्येयमावयोः श्रूयतां कथा ।
स एव साम्बः किं गुप्त्या यज्ञवत्येव सास्म्यहम् ॥ १६१ ॥

त्वयापि श्रुतमेवावामेवं देवासुरेशयोः ।
जनित्वा मुनिशापेन प्र[1]यावां विरहव्यथाम् ॥ १६२ ॥

अहो ! मे हृदि नै[2]ष्ठुर्यं यच्चिरोपनते प्रिये ।
नाश्लिष्टं कष्टमौचित्यं चिन्तितं पापया मया ॥ १६३ ॥

इत्यालपन्ती संतापे[3]मज्जन्ती मदुरःस्थले ।
मूर्च्छया पतिता भूयः प्रत्याश्वस्येदमभ्यधाम् ॥ १६४ ॥

[4]न युक्तं सखि ! संतप्तुं संतोषविषये त्वया ।
किं ते जन्मान्तरप्रेयानचिरादनुभूयताम् ॥ १६५ ॥

अनुरूपवरप्राप्तिः पितृभ्यां तेऽनुमन्यते ।
चण्डवर्मा विरुन्ध्यात्तत् कर्तव्यो गूढसंगमः ॥ १६६ ॥

इत्यादि चिरमुक्त्वैनामाश्वास्याहमिहागता ।
दुर्वचा वर्तते तस्या न जाने कीदृशी दशा ॥ १६७ ॥

इति मृदु कथयित्वा लज्जयानम्रवक्त्रां
वरतनुमभिधाय स्वैरमात्मीयवार्ताम् ।

1. साहं. खं.
2. धृष्ण्य. ख. ग.
3. पैर्म. क. ग.
4. गच्छ त्वं सखि संतप्तं. क. ग.

निपुणमिति कुमारः पूर्वजन्मोचितार्थां
रमयितुमथ गाथां प्राहिणोत् प्राणनाथाम् ॥ १६८

अरुन्धती[1]मारिशरपीडितात्मनो
यदाश्रमे तरुणि ! पुराप्यदर्शयः ।........
तदद्य ते हृदि मदनास्त्रमुद्रितं
मृदुस्मिते ! लिखितमिवात्र तिष्ठति ॥ १६९ ॥

इत्येनां तदनु विसृज्य सोपचारं
यत्रास्य प्रियजनदर्शनोत्सवोऽभूत्
आनन्दस्तिमितमना विनोदनार्थी
तं देशं ससुहृदुपाययौ कुमारः ॥ १७० ॥

॥ इत्यवन्तिसुन्दरीकथासारे षष्ठः परिच्छेदः ॥

॥ अथ सप्तमः परिच्छेदः ॥

अथालोक्य द्विजं कञ्चित् प्रभाते देवमन्दिरे ।
सज्जं प्रायोपवेशाय प्राप्यैनं तावपृच्छताम् ॥ १ ॥

अकस्मात् किमयं कायस्त्यज्यते को भवानिति ।
पृष्टः प्रान्तोपविष्टाभ्यां ताभ्यां भूतार्थमभ्यधात् ॥ २ ॥

अग्रहारोऽस्त्यगस्त्याशाभूषणं चोलभूमिषु ।
व्याघ्रग्रामाह्वयः सोऽयं तद्देशाभिजनो जनः ॥ ३ ॥

विप्रो विद्येश्वराख्योऽस्मि ज्ञात्वा मन्त्रं कुतोऽप्यहम् ।
गारुडं तेन वित्तार्थी लब्धविद्यालवोऽभवम् ॥ ४ ॥

सर्वेषां पुरुषार्थानामर्थाधीनतया पुनः ।
अशिश्रयममर्यादं राजवेश्म किमप्यहम् ॥ ५ ॥

तत्र क्षुद्रान् पशुप्रायानपश्यं पार्थिवब्रुवान् ।
उपचीयन्त एवैषां मलानि त्वभिषेकतः ॥ ६ ॥

येषां दोषेषु सौहार्दं साहसेषु सहायधीः ।
नयज्ञबुद्धिर्मायाविष्वश्लीलोक्तिषु वाग्मिता ॥ ७ ॥

1. स्मर. क.



निर्वेदकरमाचारं दृष्ट्वा तेषां दुरात्मनाम् ।
निवृत्तः सर्वसंसारान्मरणायेदमारभे ॥ ८ ॥

इति श्रुत्वा शुभां वाचं व्याजहार नृपात्मजः ।
सत्यं दुःसह एवासौ पुंसां दुर्जनसङ्गमः ॥ ९ ॥

सन्त्येव भुवि सन्तोऽपि तुल्याः स्वार्थपरार्थयोः ।
सद्भिः सहोपवासोऽपि स्वदेतान्यैः सुखाशनात् ॥ १० ॥

अपनीयायुषि द्वेषं तद् भवाननुयातु नः ।
इति ब्रुवति तत्रैका शिबिका समदृश्यत ॥ ११ ॥

तस्यां वर्षवरप्रायैः स्त्रीजनैर्वृतमन्तिकात् ।
रुजा परीतमेत्यामी सोमदत्तमलक्षयन् ॥ १२ ॥

सोमदत्तः सुहृत्प्रेम्णा स्वस्थीभूतः स तैः सह ।
प्रच्छाये क्वचनासीनो निगृह्य ज्वरवेदनाम् ॥ १३ ॥

वर्गाद्यन्तान्तस्थैर्ऋलृवर्णविवर्जितैः स्वरैर्मृदुभिः ।
स चतुर्विंशतिवर्णैः स्वचरितमनुवर्णयांचक्रे ॥ १४ ॥

कुमार ! तत्राचलकानने त्व-
य्यलोकिते ताम्यति मित्रलोके ।
चरत्यवन्यामनुपारियात्रं
वनोर्मिमालिन्यपरा मयापे ॥ १५ ॥

ततो मणिं तत्पुलिने निलीनं
विलोक्य मत्वा पतितं कुतोऽपि ।
पटान्तमानीय चरन्नटव्यां
व्यलोकयं विप्रकमार्तरूपम् ॥ १६ ॥

विचार्यते केन वनं त्वयैत-
न्मयैवमुक्ते लपितं च तेन ।
अकिञ्चनः किञ्चन याचमानः
प्राणक्रियां लाटपतेर्नयामि ॥ १७ ॥

लाटोत्तमे तत्र च मत्तकाले
कन्यानिमित्तं प्रति पारियात्रम् ।
प्रवर्तमाने कटकानुवर्ती
चराम्यरण्ये परियाचनाय ॥ १८ ॥

एवं मयाकर्ण्य मणौ वितीर्णे
विप्रे ततः प्रीततरे प्रयाते ।
प्रमीलितः किञ्चन तं च विप्रं
किमप्यनीकं पुरतो व्यलोकि ॥ १९ ॥

ते मामवोचन् परिवार्य कोपा-
न्मित्राणि चान्ये मणयः क्व चेति ।
नावैमि किञ्चित् पुलिने मयैत-
न्माणिक्यमालोकितमित्यवोचम् ॥ २० ॥

एतावतान्यानपि पञ्च चोरा-
नानीय तान् नः कटकं नयन्तः ।
ते मानवाः कर्णकटु क्वणन्तः
कारालयं नो नियमय्य निन्युः ॥ २१ ॥

उक्ता विविक्ते तु मया किमेतत्
के यूयमित्यूचुरमी च चोराः ।
लाटोऽयमत्रापचिते रिपाव-
प्यलं निकर्तुं न तु पारियात्रः ॥ २२ ॥

तत्कन्यकां लाटपतिः प्रतीतां
नाम्ना च वामाञ्चितलोचनेति ।
आकर्ण्य तूर्णं परिणेतुकामः
प्रचक्रमे मित्रतया प्रयातुम् ॥ २३ ॥

अवेत्य तन्मित्रतयाप्यरातेः
प्राप्तिर्न युक्तेति विचार्य कन्याम् ।
अमात्यमित्रावनिपालयुक्ता-
मनीनयत्तामपि पारियात्रः ॥ २४ ॥



पञ्चापि चोराः कटकानुयाता
अमात्यपुत्रानुचरा वयं ते ।
रत्नानि लाटालयमेत्य वैरी-
त्यचोरयामात्र निलीयमानाः ॥ २५ ॥

वने क्वचिच्चोरितरत्नमेकं
च्युतं ततः प्राप्य निकेतमार्ताः ।
एतन्निमित्तं पुनरप्युपेताः
क्रान्ता वयं चैत्रमनीकवीरैः ॥ २६ ॥

आकर्ण्य चैतच्चरणेन यन्त्रं
लूना वयं नक्तमथैव चोरैः ।
लुप्त्वालयं कान्यपि यामिकाना-
मालूय कन्याकटकं प्रपन्नाः ॥ २७ ॥

तत्रैकतो यामवतीविरामे
क्षमान्निमीलन्नयनोऽप्युपान्ते ।
पत्रेण नारीमपि मारयन्तं
कमप्यलङ्काररुचा व्यलोके ॥ २८ ॥

तं मारयित्वा वनितामवोचं
का त्वं किमित्यालपितं च तन्व्या ।
अवैतु कन्यापरिचारिकां मां
कल्याणवर्मा मम मानपालः ॥ २९ ॥

अमात्यपुत्रः प्रणयी च योऽयं
कल्याणिना कालपुरं प्रणीतः ।
प्रकण्टको नाम चमूपतेर्नः
कुलान्तकः पीलुपतेः कुमारः ॥ ३० ॥

मैत्री परा पत्युरनेन चायं
चिरायमाणे रमणेऽत्र रात्रौ ।
प्रेम्णानुनीय प्रतिकूलरूपां
मां मारयन् कारुणिक त्वयात्तः ॥ ३१ ॥

इतीरितां वाचमवेत्य वाप्यां
रक्तावलिप्तं परिपूय कायम् ।
वेलापतेरुच्चलिते रवाव-
प्याकर्णयं व्याकुलरावमेवम् ॥ ३२ ॥

मित्रं प्रमाप्यात्मनिकेतनेऽपि
व्यलीकमारोप्य च मानपालः ।
प्रकण्टकं पीलुपतिप्रयुक्तै-
र्नियन्त्रितो यातयितुं प्रणीतः ॥ ३३ ॥

न युक्तमित्यत्र च मानपाले
क्रूराणि कर्माण्यविनीत एव ।
प्रकण्टकः किं च तयोक्तमेतत्
कोऽप्याचरन्मारयितुं ममेति ॥ ३४ ॥

लोकप्रलापानिति तत्र चित्रा-
नाकर्ण्य तूर्णं विचरन्नुपान्ते ।
तां पारियात्रावनिपालकन्यां
न्यरूपयं तत्र च पर्वतान्ते ॥ ३५ ॥

मारातुरः किञ्चन चिन्तयित्वा
विमुच्यतां मन्त्रिकुमार आर्तः ।
एतन्मयैवाक्रियतामुना ने-
त्यवोचमुच्चैः करमुन्नमय्य ॥ ३६ ॥

ते पञ्च चोरा अपि मानपालं
परीयुरुन्मूल्य बलं रिपूणाम् ।
याता वयं यत्र च चित्तचोरी
तं पर्वतं वैरिनिवारणाय ॥ ३७ ॥

विलुप्तमौलः पुनरेत्य कान्तां
प्रवातवल्लीमिव वेपमानाम् ।
चोरा वयं ते परिपालनीया
इत्यालपं तच्चरणान्तवर्ती ॥ ३८ ॥



कन्या तु कामाचितविक्रिया मां
व्रीलाविनम्राननमालुलोके ।
आलोक्य तत्रान्तिकवर्तिनी मा-
मित्यालपन्मन्त्रिकुमारकान्ता ॥ ३९ ॥

वक्त्रान्मम त्वच्चरितान्यवेत्य
प्रीतेयमत्राप्यतिमानवेन ।
रूपेण रम्येण पराक्रमेण
क्रीतेव ते कर्मकरी कुमारी ॥ ४० ॥

इत्यन्तरे मन्त्रिकुमारपूर्वा
मामन्ववर्तन्त परे च वीराः ।
लाटः पुनः पीलुपतिप्रणीतां
वार्तामवेत्याकुलमापपात ॥ ४१ ॥

रोपैरनेकानुचरं विचित्रै-
रालातचक्रेण च वारणेन ।
रणान्तरे लाटपतिं रिपुं तं
यमालयं प्रापयमात्तकोपम् ॥ ४२ ॥

पत्रेण मन्त्री मतिपालनामा
तां पारियात्राय निनाय वार्ताम् ।
प्रीतः परं तेन वितीर्य कन्या-
माकारयन्मामपि वीरकेतुः ॥ ४३ ॥

प्राप्तेयमापत् पुनरामयात्मा
मामेवमूचे च विलोक्य मन्त्री ।
कार्यान्तरात् तात! वयं प्रपन्नाः
पुरा पुरारातिमवन्तिपुर्याम् ॥ ४४ ॥

मालावती नाम च वीरकेतोः
पत्नी त्रिणेत्रं चिरमर्चयन्ती ।
तं कन्यकापत्यमयाचतैनां
प्रीतः पिनाकी पुनरित्युवाच ॥ ४५ ॥

Indologisches Institut der Universität Wien

कन्या वितीर्णा वरवर्णिनी ते
　　यः कन्यकायाः कलयेत् करान्तम् ।
अनर्चिता त्रीनपि चेन्ममतून्
　　चित्तामयेन म्रियते पुरायम् ॥ ४६ ॥

इत्येवमेनामपि पारियात्रः
　　कुर्यामभित्रान्ततयेति मत्वा ।
तां मस्तकालाय निनाय कन्या
　　(मुक्ता विपञ्चा)पतिता तवेयम् ॥ ४७ ॥

अवन्तिपुर्यां त्वरया पुरारिं
　　ततोऽर्चयामेत्यमुयाप्यमैव ।
आनीतवान् मामयमत्र च त्वा-
　　मालोक्य निर्वा(ण इवामयो मे) ॥ ४८ ॥

इति श्रुते मन्त्रिणि तत्सुते च
　　प्रयुज्य पूजां मनुजेन्द्रसूनुः ।
हरार्चनोल्लाघसुहृत्सहायः
　　पुष्पोद्भवस्यालयमाविवेश ॥ ४९ ॥

पुष्पोद्भवस्याथ समीक्ष्य माता
　　दिष्ट्यैव दृष्टः कृपयामुनैव ।
उज्जीविताहं विपिने विपन्ने-
　　त्यादिश्य विद्येश्वरमापपात ॥ ५० ॥

तस्मिन् दिने मित्रसमाजरम्ये
　　गते परेद्युः स तु सौम्रेयः ।
प्रापय्य विद्येश्वरसोमदत्ता-
　　वुपह्वरं प्राक्रमताभिधातुम् ॥ ५१ ॥

अजायतैवं जरितारिशापात्
　　साम्बः कुमारोऽयममुष्य देवी ।
अवन्तिसुन्दर्यजनि स्मरन्तौ
　　परस्परं तौ क्षणमैक्षिषाताम् ॥ ५२ ॥



अथाविषह्यस्मरविक्रियोऽपि तां
　　प्रियाप्रदत्तां गुरुणा नृपात्मजः ।
समानतापामपि नोद्विवक्षते
　　भ्रातुः परोक्षं न तु हर्तुमीहते ॥ ५३ ॥

कालात्ययं न क्षमते विकारः
　　सन्तर्कितस्तत्र मयाभ्युपायः ।
योऽस्मासु मायाकुशलः स राज्ञे
　　विदर्शयेत् कानिचिदद्भुतानि ॥ ५४ ॥

सविस्मयायाभिजनादिरम्यं
　　तमेव निर्दिश्य वरं सुतायाः ।
आहूय पित्रा विधिवद् वितीर्णां
　　विवाहयेत्तामचिरात् कुमारम् ॥ ५५ ॥

व्यामोह्य मायाभिरशेषमेवं
　　निर्वर्तिते तेन विभोर्विवाहे ।
देव्येव रक्षिष्यति सारह...
　　......चद्वामपि तत् क्रियेत ॥ ५६ ॥

तथेति ताभ्यामनुमन्यमाने
　　स्वकान्तया तामपि सौव्रतेयः ।
निवेदितार्थामकरोन्नरेन्द्र-
　　(मुपेत्य विद्येश्वर एव) मूचे ॥ ५७ ॥

मायाम्वधीती विविधास्वहं तद्
　　देवानुगृह्यात्ववधानदानात् ।
व्यामोहनं क्रीडितमिन्द्रजालम्
　　इति त्रिभेदां प्रवदन्ति मा(याम्) ॥ ५८ ॥

.......................शेषाद्
　　दुरत्ययास्तत् पुनरिन्द्रजालम् ।
विलोकयतां विस्मयनीयमेवं
　　स्वयोगपिञ्छां भ्रमयांचकार ॥ ५९ ॥

प्रादुर्बभूवुः पुर(तश्च नागा)
स्तद्धक्षिणः पक्षिगणास्ततोऽपि ।
बहुप्रकारानिति दर्शयित्वा
योक्ष्यन् वरेण्येन वरेण कन्याम् ॥ ६० ॥

शस्त्रेण राजा शकलीकृतो य-
स्त्वया सुतस्तस्य तपस्यतोऽभूत् ।
स चक्रवर्ती भविता तवेमां
लभेत पुत्रीमिति भूपमूचे ॥ ६१ ॥

सविस्मयः स्वामनुमान्य देवीं
सुतां नरेन्द्रः स्वयमाजुहाव ।
मायामयी लोकसमक्षमन्या
कन्या कृता विस्मयदर्शिनीति ॥ ६२ ॥

आहूय मायामयमानसार-
मन्त्रिप्रधानेन ततः कुमारीम् ।
विद्येश्वरः क्लृप्तविवाहवेषं
तं दर्शयामास नरेश्वराय ॥ ६३ ॥

कुमारमेत्याग्निरथोऽपि तावद्
गुरून् समानेतुमथोत्पपात ।
क्षणेन च प्राप विमानमेकं
सर्वान् समारोप्य सवामदेवान् ॥ ६४ ॥

ततो मुनीन्द्रैः सह राजहंसं
राजर्षिमभ्यागतमभ्यनन्दत् ।
अवन्तिनाथः पितरौ कुमारो
मुनिं च सानन्दमना ववन्दे ॥ ६५ ॥

तं वामदेवो वरमेवमूचे
कालाश्रयं वत्स! जगत् समस्तम् ।
तस्मिन्निमेषादिसहस्रभेदे
कालेऽपि सन्तो विवदन्त एव ॥ ६६ ॥



वर्षं मानुषमाहु-
र्दिव्यमहोरात्रमयनयुग्मयुतम् ।
दिव्यानां वर्षाणां
चतुर्युगं द्वादशसहस्रम् ॥ ६७ ॥

तेष्वेकसप्ततिं प्र-
त्येकैको मनु(रिहा)तीतः ।
संप्रति वैवस्वत इ-
त्यूर्ध्वा अपि सप्त ते मनवः ॥ ६८ ॥

तच्च षड्गुनं पूरित-
मवशिष्टारोपणेन तु सहस्रम् ।
ब्राह्ममहः सैव निशा
...................... ॥ ६९ ॥

जलहिमतापवहानाम्
अर्कांशूनां तदा सुषुम्नाद्याः ।
सप्त विवस्वन्तस्ते
भूत्वाशु दहन्ति भुवनानि ॥ ७० ॥

संवर्तकजलदस्त-
न्निर्वाप्यो....... ।
................घे
शाम्यत्यवकाशविरहेण ॥ ७१ ॥

एकार्णवे स्वकुक्षौ
कृत्वा शेते जगत् सहस्रशिराः ।
प्रतिबुध्य स्वनिशान्ते
स सृज(ति)........ ॥ ७२ ॥

सर्गादावात्मभुवो
मरीचिरासीत् स काश्यपमवाप ।
तत आसन्नादित्या-
विवस्वतस्तेषु मनुरभवत् ॥ ७३ ॥

मनोरपीक्ष्वाकुरमुष्य........
........मित्रादपि मानसारः ।
स एष नाम्ना खलु रत्नदेव्याः (व्यां ?)
कन्यामयं रत्नमवाप देव्याम् ॥ ७४ ॥

गृहाण तामित्युदकञ्च पित्रा
स पातयामास कुमारपाणौ ।
निधाय वह्निं विधिवत् पुरोधा
विधिं विवाहोचितमाचचार ॥ ७५ ॥

वधूवरे गर्भगृहं प्रविष्टे
गते मुनीन्द्रे सहराजहंसे ।
आदाय विद्येश्वरसोमदत्तौ
पुष्पोद्भवोऽपि स्वगृहं प्रपेदे ॥ ७६ ॥

सविस्मये राजकुले सतापे
विज्ञाय मायेति नृपे कुमारः ।
विस्रम्भयन्नर्मकथान्तरैस्तै-
रेमे रमण्या रमणीयमूर्तिः ॥ ७७ ॥

अथोपहूतः श्वशुरेण राज्ञा
विलोकनाय प्रतिपारियात्रम् ।
आदाय तस्यानुमतेः स्वकान्तां
ससौत्रतेयः प्रययौ पुरोधाः ॥ ७८ ॥

नक्षत्रताराकुलमन्तरिक्षं
सन्दर्शयन्निन्दुमरीचिगौरः ।
शरन्निशि प्राणसमां कुमार-
स्तस्यै जगद्वृत्तमुदाजहार ॥ ७९ ॥

ततस्तयेत्थं विविधान् विशेषान्
निर्विश्य निद्रानुभवावसाने ।
अबोधि बद्धं निगलेन पश्य-
न्नात्मीयमङ्घ्रिद्वितयं कुमारः ॥ ८० ॥



निरीक्ष्य तत् संभ्रममुक्तनादं
नरेन्द्रकन्या नितरां रुरोद ।
(अन्तःपुरा)रक्षिबलं विलोक्य
स्यालाय राज्ञेऽभिदधे कुमारम् ॥ ८१ ॥

स चण्डवर्मा स्वयमेत्य कोपात्
तद्भ्रातृहन्तुः सुहृदं निहन्तुम् ।
प्रचक्रमे त..................
............................ ॥ ८२ ॥

............निधनोन्मुखाभ्यां
तां दर्पसाराय विनीय वार्ताम् ।
बद्धं कुमारं च सहैव नीत्वा
रुरोध दण्डेन स चण्डवर्मा ॥ ८३ ॥

संप्राप्य चम्पेश्वर........
............निःसहायम् ।
............................
सुतां च हृत्वा शिबिरं प्रपन्नः ॥ ८४ ॥

इयेष चैनां परिणीय हर्तुं
स दर्पसारानुमतेः कुमारम् ।
तदाश्रयैर्गन्धगजाग्र........
........मगधेन्द्रसूनोः ॥ ८५ ॥

............................
............................ ।
मुक्त्वा तदङ्घ्री निगलं सुरस्त्री-
र्भूत्वा प्रणम्याभ्यभणत् कुमारम् ॥ ८६ ॥

अस्म्यप्सराः सोममरीचिजाता
सुमञ्जरी नाम दिवि(भ्रमन्ती)
कदाचिदासं जलजन्मसुगन्धै-
र्निबद्धवक्त्रा पथि जालपादैः ॥ ८७ ॥

क्षोभान्ममोरश्च्युतहारयष्टि-
स्पृष्टेन रोषादघमर्षणान्ते ।
शप्तास्मि दक्षे! भव शृङ्खलेति
द्विजेन मन्दोदकवापिकायाम् ॥ ८८ ॥

प्रसाद्यमानेन मयेन्द्रियाणा-
मक्षीणशक्तित्वमकारि तेन ।
मासद्वयं त्वच्चरणोषितायां
मोक्षश्च पश्चादभवं तथैव ॥ ८९ ॥

तामाददे मानसवेगसूनु-
र्विद्याधरः प्राप स दर्पसारम् ।
तेनापकर्तुं नरवाहनाद्ये
दत्तेऽद्य विद्याधरकर्णधारे ॥ ९० ॥

स्वसुः प्रदानं द्युचराय तस्मै
प्रतिश्रुतं तेन स जातु कान्ताम् ।
त्वदङ्कसुप्तामवलोक्य कोपा-
न्मया तवाङ्घ्रिद्वितयं बबन्ध ॥ ९१ ॥

मुक्तोऽद्य शापः करवाणि किं ते
प्रसीद देवेति नतानताङ्गी ।
मद्वार्तयाश्वासय वासु! कान्ताम्
इतीरिता तेन दिवं जगाम ॥ ९२ ॥

अह्नायाथ द्विपवरमुपारुह्य तं कोपवह्नि-
ग्रासीकुर्वन् रिपुबलमसौ रोषताम्रायताक्षः ।
अन्तर्गेहाद् विवहनविधौ चण्डवर्माणमन्तं
नीत्वायान्तं सुहृद(मपहाराख्यम)ग्रे ददर्श ॥ ९३ ॥

मुक्त्वा चम्पेश्वरमुपनतं तस्य साहाय्यहेतो-
स्तत्रोपेतं तदनु सकलं मित्रलोकं विलोक्य ।
......भेजे दीप्तैरुभय...............
मन्दाकिन्याः पुलिनमुदितानन्दमुद्यन्निवेन्दुः ॥ ९४ ॥
॥ इत्यवन्तिसुन्दरीकथासारे सप्तमः परिच्छेदः ॥



॥ अथ अष्टमः परिच्छेदः ॥

अथासौ सिकतोद्देशे निषीदन् (समुपस्थितान् ।
आश्लिष्य सुहृदः सर्वान)नुरूपमुपाचरन् ॥ १ ॥

बुद्ध्वा सम्बन्धिनस्तेषां धनमित्रादिकानसौ ।
अभिनन्द्यात्मनो वृत्तं विस्तीर्यैतरयोरपि ॥ २ ॥

(शुश्रूषुश्चरितं तेषामन्वयुङ्क्त क्रमे)ण तान् ।
अपहारः प्रणम्याथ स्ववृत्तान्तमवर्णयत् ॥ ३ ॥

नगरन्ध्रगते देवे मृगयित्वा भवद्गतिम् ।
चरन्नाकर्ण्य चम्पायां मरीचिं नाम तापसम् ॥ ४ ॥

जिज्ञासुस्त्वद्गतिं तस्माद्दिव्यज्ञानजुषो मुनेः ।
गत्वा तदाश्रमं तस्मिन्नपश्यं विवशं मुनिम् ॥ ५ ॥

कुतो मरीचिरस्मान्नः प्रतिपत्स्ये सुहृद्गतिम् ।
महात्मा स किलेत्युक्तः स मां प्राह स्म निःश्वसन् ॥ ६ ॥

तादृशो मुनिरासीत् तं गणिका काममञ्जरी ।
ववन्दे जातु जातार्तिर्माता च पुनरापतत् ॥ ७ ॥

पृष्टा किमित्यवोचत्ते चरणौ शरणं गता ।
आमुत्रिकसुखायेत्थं जननी च व्यजिज्ञपत् ॥ ८ ॥

एषा मे दोषमाचष्टे स्वाधिकारावतारणम् ।
एष खल्वधिकारो नो दुहितुः साधु वर्धनम् ॥ ९ ॥

अङ्गक्रिया मिताहारैः पोषणं धातुवर्धनैः ।
उत्सवः सर्वदा पुंसां शैशवे नातिदर्शनम् ॥ १० ॥

शिक्षा चानङ्गविद्यानां नृत्तवाद्यादिबोधनम् ।
वार्तावबोधनं शास्त्रेष्वाजीवज्ञानलम्भनम् ॥ ११ ॥

क्रीडा सजीवनिर्जीवद्यूतादिष्ववतारणम् ।
अभ्यासनं जनादाप्तादभ्यन्तरकलासु च ॥ १२ ॥

यात्रोत्सवादिषु स्फीतमण्डनायाः प्रकाशनम् ।
सङ्गीतादिषु तद्वित्तैर्नैपुणख्यापनं जनैः ॥ १३ ॥

पीठमर्दविटप्रायैः शीलमाधुर्यवर्णना ।
अनल्पेन च शुल्केन स्थापनं यौवने(स्थिते ॥ १४ ॥

विशिष्ट)गुणयुक्ताय स्वतन्त्राय समर्पणम् ।
गुणाढ्यायाल्पशुल्केऽपि दानं बह्वपदेशतः ॥ १५ ॥

अस्वतन्त्राय वा दत्त्वा गुरुभ्यः शुल्कसंग्रहः ।
(गान्धर्वेण धनालाभे स्वीकृत्य स्वा)मिनं धनैः ॥ १६ ॥

नीत्यागम्य धनादानं दुग्धप्रायेण विग्रहः ।
लुब्धस्य रागिणस्त्यागोत्थापनं प्रतिहस्तिना ॥ १७ ॥

असारस्यावमानैर्वाकृतजर्नै(रपवाहनम् ।
अर्थदैर्धनिभि)र्भूयः संयोजनमिति स्थितिः ॥ १८ ॥

गणिकायाश्च युक्ता नो गम्यं प्रत्यनुरागिता ।
सत्यामपि क्वचित् प्रीतौ मातृवाक्यानतिक्रमः ॥ १९ ॥

स्वधर्म(मनवेक्ष्येयं क्वचि)द् वैदेशिके द्विजे ।
रमते स्वव्ययेनैषा कुटुम्बं चावसादितम् ॥ २० ॥

निषिद्धा वनवासाय प्राप्तेयं चेत्तपस्यति ।
संस्थास्यते जनः सर्वोऽप्यत्रैवेति रुरोद सा ॥ २१ ॥

आश्वास्यैनां तपश्चर्यादुश्चरत्वनिदर्शनैः ।
निर्बद्धा मुनिनाप्येषा जाता निश्चलनिश्चया ॥ २२ ॥

कालेनानुचितक्लेशा व्यवसायाद् विरंस्यति ।
गम्यतामिति तेनोक्तस्तथेति स्वजनो ययौ ॥ २३ ॥

भक्त्या परिचरन्त्येनमर्चनाकुसुमोच्चयैः ।
त्रिवर्गबद्धया वाचा न चिरात् सान्वरञ्जयत् ॥ २४ ॥

एकान्ते सा तमित्यूचे प्रसङ्गादर्थकामयोः ।
धर्ममेवोत्तमं मन्ये यत्ताभ्यां नैष बाध्यते ॥ २५ ॥



तथा पितामहादीनां श्रूयतां खल्वतिक्रमाः ।
न धर्मपीडां कुर्वन्ति श्रेयान् धर्मस्ततो मतः ॥ २६ ॥

इत्याकर्ण्योल्बणप्रीतिरभ्यधादयि ! सुन्दरि ! ।
अर्थकामानभिज्ञोऽहं कीदृशाविति साब्रवीत् ॥ २७ ॥

कृष्याद्युपायस्तीर्थप्राप्त्यर्थोऽर्थस्त्वर्जनात्मकः ।
अनुत्तरसुखस्पर्शः कामः स्त्रीपुंसयोरिति ॥ २८ ॥

तन्निशम्यासजत्तस्यां मूढात्मा तद्गृहं गतः ।
तया समाजमन्येद्युः स निन्ये नृपसन्निधौ ॥ २९ ॥

जिताहमनया दास्यमभ्युपेतामिति प्रभुम् ।
प्रणनामापरा सापि स्तुता जनतया ययौ ॥ ३० ॥

तमृषिं पुनरि(त्यूचे स्वार्थः) कर्तव्य इत्यसौ ।
प्रिये ! किमेतदित्युक्ता सा तत्कारणभ्यधात् ॥ ३१ ॥

यया पराजितं तस्मिन् भवदावर्जनं प्रति ।
पणबन्धस्तया (मेऽभूत् कृतार्थां त्वत्प्रसादतः) ॥ ३२ ॥

तच्छ्रुत्वा जातवैराग्यः शून्यमेव न्यवर्तत ।
सोऽहमस्मि क्षणेन स्यां त्वदर्थापादनक्षमः ॥ ३३ ॥

अस्यां वसाङ्गपुर्यामित्यथास्तमगमद् रविः ।
(नीत्वा निशां सहानेन नगरायोदचालिषम् ) ॥ ३४ ॥

बहिर्विहारमासीनमाधिक्षीणमरूपिणम् ।
ऐक्षे क्षपणकं पृष्टः शोकहेतुमशिश्रवत् ॥ ३५ ॥

श्रेष्ठिपुत्रोऽहमत्राढ्यो विरूप इति (कीर्तितः ।
अन्यः सुन्दर)को नाम विश्रुतः कान्तिमानभूत् ॥ ३६ ॥

तयोर्नौ वसुरूपोत्थस्पर्धयोः पौरधान्त्रकाः ।
प्रकृष्टगणिकाप्राथ्र्यः श्लाघतामित्यकल्पयत् ॥ ३७ ॥

(सां पुनर्ग)णिकारत्नं चकमे काममञ्जरी ।
तया स्वायत्तसर्वस्वस्त्यक्तः कौपीनमात्रकः ॥ ३८ ॥

लोकापहासलक्ष्यत्वं प्रपन्नो जैनवर्त्मनि ।
अवतीर्णोऽस्मि सौकर्यात्तस्मिन् दुःसहयन्त्रणः ॥ ३९ ॥

श्रुतिवर्त्मापवादेन प्रवृद्धानुशयः स्वयम् ।
एकान्तमेत्य शोचामीत्याकर्ण्याहमभाणिषम् ॥ ४० ॥

मा विषादीर्निजैर्दुम्नैर्योजयामीति तां पुरीम् ।
आविशन्नक्षधूर्तानामपश्यं केलिकौशलम् ॥ ४१ ॥

क्वचित् प्रमादविन्यस्तशारके हसितं मया ।
किं त्वं शिक्षयसि द्यूतं देविष्यामि त्वयेति माम् ॥ ४२ ॥

अभिधायेतरः क्रोधाद् व्यतिषज्य जितो मया ।
सभिकाय समर्प्याहं जितद्रव्यार्धमुत्थितः ॥ ४३ ॥

विमर्दकः सुहृन्मेऽभूद् यन्मूलं द्यूतमापतत् ।
ततो यथावदश्रौषमाढ्यलुब्धजनं पुरम् । ४४ ॥

तस्करत्वेन लुप्त्वा तान् कृत्यवर्त्म प्रवर्तयन् ।
गाढे तमसि गूढात्मा लुब्धागारमचोरयम् ॥ ४५ ॥

निर्गत्य नृपमार्गे मां विलोक्य व्यथितां स्त्रियम् ।
दृष्ट्वा क्व यासि कासीति ब्रुवाणं भणति स्म सा ॥ ४६ ॥

आर्य ! कन्यास्मि पुर्यस्यां नाम्नाहं कुलपालिका ।
धनमित्राय पित्राहं जातमात्रा प्र(तिश्रुता ॥ ४७ ॥

अर्थिसा)त्कृतसर्वस्वं तमनादृत्य दुर्विधम् ।
अद्यार्थपतये नाम प्रदित्सति पिता तु माम् ॥ ४८ ॥

तदमङ्गलमप्राप्य श्वो भावीति निशि (स्वयम् ।
यामि प्रियतमागारम)थैनां दययान्वयाम् ॥ ४९ ॥

ततोऽहं रक्षिसंपाते सर्पदष्ट इवापतम् ।
सा कन्या मन्नियोगान्मे भार्या भूत्वाश्रुमुख्यभूत् ॥ ५० ॥

मुद्रादिभिरुपक्रम्य काल........................ ।
...........प्रार्यां प्रोत्थायाहं सहानया ॥ ५१ ॥



धनमित्राय तां नीत्वा तस्करोऽहमिति ब्रुवन् ।
सम्भाव्येत(वितः?) परं तेन प्रहर्षद्रवदात्मना ॥ ५२ ॥

तया स(ह पुरीमेनां) जिहासन्तं निवार्य तम् ।
आसितव्यमिहैव स्यात् प्रज्ञाशैथिल्यमन्यथा ॥ ५३ ॥

तन्नयाव स्वमावासमिमामित्यमुना सह ।
नीत्वा पितुर्गृहं सर्वं मुषित्वा निरयासिषम् ॥ ५४ ॥

मार्गे मत्तगजं दृष्ट्वा तेनार्थपतिमन्दिरम् ।
लुप्त्वा मुक्त्वा च तं भूयः प्राप्यालयमशेवहि ॥ ५५ ॥

श्रुत्वा मासावधिं प्रातर्विवाहं तमुपह्वरे ।
धनमित्रमथावोचमाचक्ष्वैवं नरेश्वरम् ॥ ५६ ॥

देव ! मह्यमनुज्ञाय वर्धितां मयि दुर्विधे ।
कुबेरदत्तः स्वां कन्यामन्यस्मै दित्सतीत्यहम् ॥ ५७ ॥

असून् जिहासुरादिष्टः केनापि जटिना वने ।
नैर्धन्यमूलं मत्वैतद्दत्त्वा मे चर्मभस्त्रिकाम् ॥ ५८ ॥

मन्त्रसिद्धोऽहमस्माभिः साधितेयमिहानया ।
कृतकृत्यश्चिरं भूत्वा विशामि जरसा रसाम् ॥ ५९ ॥

अन्यायात्तं धनं कृत्वा तस्यैवान्यच्च विप्रसात् ।
आराधिता सती प्रातः स्वर्णपूर्णा भवत्यसौ ॥ ६० ॥

वणिग्भ्यो गणिकाभ्यो वा दुग्धे चेयं मदन्यतः ।
ईदृशः कल्प इत्युक्त्वा ग्रावच्छिद्रमथाविशत् ॥ ६१ ॥

देवानुमत्या भोक्तव्येत्यसावप्यनुमंस्यते ।
न कश्चिदेनं मुष्णीयादित्युक्त्वा स्वगृहं व्रजेः ॥ ६२ ॥

लप्स्यसे च ततः कन्यां जनश्चौर्यंश्च नो भवेत् ।
इत्यादिष्टः स हृष्टात्मा यथोक्तमनुतस्थिवान् ॥ ६३ ॥

कदाचित् काममञ्जर्या भगिनी रागमञ्जरी ।
नर्तयामास नृत्यन्ती चित्त(जेन समं म)नः ॥ ६४ ॥

धनमित्रः स्मरार्तं मामवबुध्येदमब्रवीत् ।
धन्या सा गणिकाकन्या यैवं त्वन्मनसि स्थिता ॥ ६५ ॥

भावस्तस्यास्त्वयि व्यक्तः स्मरास्त्रव्यथिता(निशम् ।
गुणशुल्काहमित्या)स्ते सा निषेधति च स्वसा ॥ ६६ ॥

चिन्त्यं कृत्यमिहेत्यस्या ज्यायस्या पणितं मया ।
मुषित्वा चर्मरत्नं ते दद्यां देया यदि स्वसा ॥ ६७ ॥

मूढया बाढमित्युक्ते................................ ।
................................भूयान्वभवं प्रियाम् ॥ ६८ ॥

भूत्वार्थपतिगृह्यो मे प्रणिधिः स विमर्दकः ।
निजस्यो(र्भर्त्स्यो ?)दारकं चर्मस्तेयं द्योतयति स्म सः ॥ ६९ ॥

...........................................दितः ।
आहूयार्थपतिं भूपस्तस्याह्वानमचोदयत् ॥ ७० ॥

स तु मद्ग्राहिताभिज्ञः प्रागेवोज्जयिनीं गतः ।
॥ ७१ ॥

त्वाम...........................भिया ।
क्रोधादर्थपतौ कारां प्रापिते काममञ्जरी ॥ ७२ ॥

विरूपकाय दत्वार्थं निस्वीभूताजिनाशया ।
धनमित्रमु.......................वताम् ॥ ७३ ॥

आर्तेनैत्र मया चोक्ता विविक्ते काममञ्जरी ।
प्रायो रहस्यनिर्भेदादाहूतासि त्वयोदिते ॥ ७४ ॥

हते च मयि बालेयं न जीवे.......... ।
....................तमित्यथ बन्धकी ॥ ७५ ॥

तदद्यार्थपतौ रूढं निर्देक्ष्यामि ततो हृतम् ।
इति क्ष्मापसमीपे सा तमेवाचष्ट तस्करम् ॥ ७६ ॥

उदारकागिरा राज्ञा स जी............ ।
..............स्वैरं परिणीतवति प्रियाम् ॥ ७७ ॥



तच्चौर्यात्तत् पुरं जातं व्यत्यस्तार्थिधनिव्रजम् ।
अथाहं चोरयामीत्थं पा............ ॥ ७८ ॥

..............भिर्मुक्तो मदेनापि तयापदा ।
धनमित्रः प्रिया चेमौ रक्ष्याविति विचिन्तयन ॥ ७९ ॥

सृगालिकां प्रियाप्रेष्यां................ ।
.......धनमित्रस्य तस्याश्चाजिनमौक्तिके ॥ ८० ॥

मुषित्वा कृतकृत्योहामित्थं संगतयोरिति ।
क्व तन्निहितमित्यस्य पत............ ॥ ८१ ॥

........च्छलात् कर्णे कर्तव्यं कथितं मया ।
रक्षिभिश्चारकं नीतस्तदध्यक्षेण भूयशः ॥ ८२ ॥

चर्मरत्नप्रदानाय भर्त्सितो ना........ ।
..........................सृगालिका ॥ ८३ ॥

फलितस्त्वन्नयः प्रोक्तो धनमित्रस्तथा मया ।
न्यवेदयन्नृपायासौ मित्रवत् कोऽपि तस्करः ॥ ८४ ॥

मुष्णन्नजिनरत्नं मे रक्षिभिर्निश्यगृह्यत ।
तन्मे दापयितुं देवः प्रसीदत्विति भूपतिः ॥ ८५ ॥

प्रत्यर्पयितुकामस्तदद्य त्वां न जिघांसति ।
धात्रीमुखेन संसृज्य राजपुत्रीं परं मया ॥ ८६ ॥

अम्बलालिकानुसक्ते मय्यतिस्निग्धाभवच्च सा ।
ततः कान्तकनामानं दक्षं बन्धनरक्षिणम् ॥ ८७ ॥

कामार्ता राजकन्या त्वां विलोक्येति व्यलोभयम् ।
उच्छिष्टवासताम्बूलवस्त्रव्यतिकरादिना ॥ ८८ ॥

अप्रकाश्यैव कन्यायाः स दूरमुदमाद्यत ।
सुरुङ्गया प्रवेष्टव्यं त्वयान्तारिति मद्गिरा ॥ ८९ ॥

सुरुङ्गाकरणाय त्वमुन्मत्तेन मुमुक्षितः ।
इत्थं तयोपनीतेन प्रतिश्रुत्य विमोचनम् ॥ ९० ॥

मुक्तबन्धः सुरुङ्गामप्यखनं बन्धनोदरात् ।
निह्नुत्य निह्नुनिष्यन्तं निहत्यैनं सुरुङ्गया ॥ ९१ ॥

गत्वा कन्यापुरं तस्मिन् मोषाय कृतनिश्चयः ।
प्रज्ज्वलन्मणिदीपं तं प्रविश्य नृपकन्यकाम् ॥ ९२ ॥

विस्रब्धसुप्तामद्राक्षं निद्रानिभृतविभ्रमाम् ।
शशिमण्डलसंकाशपर्यङ्कतलशायिनीम् ॥ ९३ ॥

शरदम्बुधरोत्सङ्गशय्यामिव शतह्रदाम् ।
तस्करस्यापि मे चेतस्तयैव मुषितं तदा ॥ ९४ ॥

अशरीरशराविद्धो नावबुद्धोऽस्मि किञ्चन ।
अनाश्लिष्यन्न शक्नोमि स्थातुमाश्लिष्टया ध्रुवम् ॥ ९५ ॥

क्रन्दिष्यते तदत्रैवं कर्तव्यमिति चिन्तयन् ।
आलिख्य तदवस्थां तामार्यश्च फलके क्वचित् । ९६ ॥

अलिखं मत्प्रतिच्छन्दं तत्पदद्वन्द्वगोचरम् ।
.................................... ॥ ९७ ॥

त्वामयमाबद्धाञ्जलि
दासजनस्तमिममर्थमर्थयते ।
स्वपिहि मया सह सुरत-
व्यतिकरखिन्नैवमेव त्वम् ॥ ९८ ॥

इत्थं निष्क्रम्य कश्चिन्मे बद्धो नागरिकः सुहृत् ।
एवं हतः कान्तकस्ते लभ्यं निर्भिद्य तत्पदम् ॥ ९९ ॥

इत्थं तमभिधायाथ प्रस्थितः ससृगालिकः ।
मार्गे नागरिकापाते वायुग्रस्त इवाभवम् ॥ १०० ॥

ययाचे सा तु मन्माता भूत्वा मद्ग्रहणाय तान् ।
किमप्यबद्धमुक्त्वाहं धावितः सान्वधावत ॥ १०१ ॥

उन्मत्तमेव मत्वा मां विनिवृत्तेषु रक्षिषु ।
गत्वास्मद्वणिकावासं तयैवागमयं निशाम् ॥ १०२ ॥



सम्भूय सुहृदान्येद्युः प्रत्यापन्नात्मतेजसः ।
मरीचेरवबुद्ध्यैवं भवत्प्राप्तिमवास्थिषि ॥ १०३ ॥

कान्तकस्यापचारं तन्निधनञ्च निवेदयन् ।
कारकाधिकृतश्चक्रे राज्ञा नागरिकः स मे ॥ १०४ ॥

तन्मुखेन तया गत्या गत्वान्तः समगंसि च ।
सृगालिकोक्तमद्वार्तारक्तया राजकन्यया ॥ १०५ ॥

चण्डवर्मबलाक्रान्ते तस्मिन्नेवान्तरे पुरे ।
अमर्षणे रणे क्षिप्रं गृहीते चण्ड(सिंह ?)वर्मणि ॥ १०६ ॥

बलादम्बालिकां बालामपहृत्य प्रियां मम ।
प्रवृत्ते परिणेतुञ्च प्रचण्डे चण्डवर्मणि ॥ १०७ ॥

अहं तस्योत्सवोद्देशं प्रविश्य निभृतायुधः
अजिग्रहं करं मृत्योस्तत्करग्रहणोन्मुखम् ॥ १०८ ॥

वेपमानां प्रियामन्तःपुरं प्रापय्य निष्पतन् ।
देवदर्शननामैतद् भागधेयमयासिषम् ॥ १०९ ॥

इति प्रीतः प्रशस्यैतान्निशम्य नृपनन्दनः ।
उपहारमथापृच्छत् स बद्धाञ्जलिरभ्यधात् ॥ ११० ॥

एषोऽप्यहं विदेहेषु कदाचित्तापसीगृहम् ।
विश्रमायाविशं सा मद्दर्शनादश्रुमुख्यभूत् ॥ १११ ॥

अनुयुक्ता मया दीर्घं निश्वस्योवाच तापसी ।
प्रहारवर्मा नन्वत्र श्रूयते मिथिलेश्वरः ॥ ११२ ॥

स पुरा मगधान् गत्वा विक्रम्य तुमुले मृधे ।
प्राणितः स्वपुरं गच्छन्निरुद्धः पथि लुब्धकैः ॥ ११३ ॥

तत्सुतेन करस्थेन भ्रष्टाहं सार्थविद्रवे ।
व्याघ्रक्षता क्षणं जह्ने बालस्त(स्कर)दारकैः ॥ ११४ ॥

अरक्ष्ये वृष्णिपालेन स्वस्थायां मयि मत्सुता ।
तत्रागत्याब्रवीत् सर्वं शबरग्रहणं शिशोः ॥ ११५ ॥

किरातेनात्मनो रक्षा वधस्तस्योद्विवक्षतः ।
स्वदेशजेन यूनासीदात्मोद्वाहः समागमः ॥ ११६ ॥

इति श्रुत्वोपसृत्येमां पुंसा तेन समं पुरीम् ।
अदहाव महादेव्याः श्रोत्रे पुत्रकवार्तया ॥ ११७ ॥

स राजा ज्येष्ठपुत्रेण दैवाद् विकटवर्मणा ।
चिरं निगृह्य बद्धोऽभून्नीता देव्यपि बन्धनम् ॥ ११८ ॥

साहं प्रव्रजिता देवीं सुता मे कल्पसुन्दरीम् ।
अभजत्तौ सुतौ स्यातामद्य त्वत्सदृशाविति ॥ ११९ ॥

श्रुत्वाहमपि जा(ताश्रुः) सोऽहमस्मि तवात्मजः ।
अलमस्मि च तं हन्तुं न जानन्त्यत्र मां जनाः ॥ १२० ॥

इत्युक्त्वा ग्राहिताहारो हर्षनिर्भरया तया ।
देवीमुखेन तं हन्तुं किञ्चिज्जाल(मचिन्तयम्) ॥ १२१ ॥

तस्यान्तःपुरवृत्तान्तं मयि पृच्छति सा सुता ।
तत्रोपेत्य प्रहृष्टा मां निशम्याचष्ट तत्प्रिया ॥ १२२ ॥

रूपशीलवयोरम्या कलासु कृतकौशला ।
भर्तारमभिभूयास्ते नित्यशूरमदक्षिणम् ॥ १२३ ॥

इत्याकर्ण्य तया तस्मिन् देव्यास्तत्समनिन्दया ।
अनुरूपवरस्त्रीणां स्तुत्या वैरमवीवृधम् ॥ १२४ ॥

कुसुमादिप्र(दानेन) प्रवणायां मदाकृतेः ।
दर्शनाद्धृद्भावायाः कामोन्मादमवर्धयम् ॥ १२५ ॥

(एतावानेवायं ग्रन्थ उपलब्धः)

---